# संवादमाला

[संस्कृतभाषयोपनिबद्धास्त्रयोदश दैनन्दिनसंवादाः ।]



—आ० रा० रत्नपारखी

# SAMVĀDAMĀLĀ

[ Thirteen dialogues written in Sanskrit language. ]

*author :*

**Anandavardhana Ramachandra Ratnaparakhi,**

**Vidyalankar.**

**1966**

# संवादमाला

[संस्कृतभाषयोपनिबद्धास्त्रयोदश दैनन्दिनसंवादाः ।]

प्रणेता :

विद्यालङ्कारबिरुदोपेतो रत्नपारखीत्युपाह्वो रामचन्द्रसूनुरानन्दवर्धनः ।

१९६६

# आशिष:

प्रिय रत्नपारखी जी,

यह पुस्तक मैंने देख ली है। पूरा तो नहीं पढ़ सका; पर प्राय: पूरा ही उलट-पुलट गया हूँ। बड़ी सुन्दर संस्कृत में आपने इसे लिखा है। आजकल संस्कृत के विद्वान् जब संस्कृत लिखने लगते हैं, तो प्रायः लोकभाषा में सोचते हैं और उसका संस्कृत उल्था कर देते हैं। आपकी भाषा उससे भिन्न है। इसमें संस्कृत के मँजे हुए पुराने लेखकों की भाषा का रस मिलता है। मैं आश्चर्य के साथ कई अंशों के भाषा-माधुर्य का आनंद ले सका हूँ। इस सुन्दर रचना के लिए मेरी हार्दिक बधाई स्वीकार करें। पुस्तक शीघ्र प्रकाशित होने योग्य है। संस्कृत विद्यार्थियों के वार्त्तालाप के अभ्यास के लिये तो बहुत उपयोगी है।

२४-२-'५८

—*हजारीप्रसाद द्विवेदी*

अध्यक्ष, हिन्दीविभाग,

हिन्दू विश्वविद्यालय,

बनारस।

## WISHES

My dear author Mahoday,

It was with the greatest pleasure that I have read through your wonderful composition. Once I had commenced reading, I could not stop myself from going through the entire work, as its subject-matter and style held me in a magic-like grip. Please allow me to congratulate you on this excellent production.

The best method of learing a language is by learning to think, speak and write in it directly. For this conversational literature written in good, forceful and tasteful style is an invaluable asset. This book seems to me to satisfy that long-desired need in Sanskrit and I feel that students of this divine tongue are sure to benefit by its careful study and assimilation in thought and diction.

I hope and pray that this book will soon be available in print in the public interest. I wish you, the learned author, the best of luck and energy for producing further literature of this kind and for inspiring others to produce such work for our national enlightenment.

Verbum Sapienti Sat
Prafulla Chandra Bhanj Deo
Member, Rajya Sabha.
17-3-'58

# दो शब्द

आज २६ जनवरी, १९५७ की ब्राह्ममुहूर्त्तवेला में, अपनी इस चतुर्थ कृति 'संवादमाला' को पूर्ण रूप प्रदान करते हुए मुझे अत्यधिक प्रसन्नता हो रही है।

यों ही विनोद में मैंने इन संवादों को लिखना आरम्भ किया था। कल्पना नहीं थी कि, इन्हें भी कोई आकार प्राप्त हो जायगा। परन्तु एक विचित्र प्रेरणा रही, जिसने मनोरंजन की भावना से आरम्भ किये गये इस प्रयत्न को भी एक निश्चित आकार प्रदान कर दिया। फलस्वरूप ये तेरह संवाद आज पाठकों के समक्ष प्रस्तुत हैं। इनके गुणावगुण तथा उपादेयता-अनुपादेयता के सम्बन्ध में वे ही कुछ कह सकें तो कहें।

मैं तो इतना ही कहूँगा कि, संस्कृत में मुझे बहुत आनन्द आता है। पढ़ने में भी—लिखने में भी। इन संवादों के लिखने में मेरे मन को जो आनन्द प्राप्त हुआ है, उसका वर्णन मैं नहीं कर सकूँगा। मेरा यह आनन्द किसी प्रकार उस शक्ति तक भी पहुँच जाय, जो मुझे सदैव कार्यप्रवण बने रहने की प्रेरणा देती रही है, तो मेरा यह एकगुणित आनन्द सहस्रगुणित हो जायगा, इसमें सन्देह नहीं। तथास्तु।

डी–१४७, सरोजिनीनगर,
नई दिल्ली।

—आ० रा० रत्नपारखी

दिनाङ्क : २६-१-'५७

# सूची



---

*इमे पृष्ठाङ्काः नैव मुद्रिताः। अग्रतः पृष्ठतश्च मुद्रितान् पृष्ठाङ्कान् विलोक्य वाचकैः स्वयमेव त ऊह्याः।

( **नेपथ्ये ।** )

पुरोडाशा[1] गृह्यन्तां पुरोडाशाः ! सहैयङ्गवीनाः पुरोडाशाः !!

(**ततः प्रविशति शय्यारूढा पद्मावती तथाविधो जयदेवश्च ।**)

**पद्मावती** : ( **स्वगतम् ।** ) हन्त, प्रभाता शर्वरी । मुखादिकम्प्रक्षाल्य निर्वर्त्य च प्राभातिकं कृत्स्नमपि कृत्यजातं, द्रागेव प्रातराशस्य प्रातर्भोजनस्य च प्रबन्धो विधातव्यः । अद्य जयदेवेन सत्वरमेव कार्यनिलयम्प्रति गन्तव्यमस्तीति । परम्प्रातराशाय किं निष्पाद्यताम् ?

( **ततः प्रविशति चक्लिकारूढः[2] प्राभातिकः पुरोडाशविक्रयिकः ।** )

**विक्रयिकः** : पुरोडाशा गृह्यन्तां पुरोडाशाः ! सहैयङ्गवीनाः पुरोडाशाः !!

**पद्मावती** : ( **स्वगतम् ।** ) अस्तु । अयम्पुरोडाशविक्रयिको गच्छति । तमाहूय केचन पुरोडाशा हैयङ्गवीनं च गृह्येत । एतदेवाद्य प्रातराशाय भवतु । ( **शय्यामुज्झित्वा प्रकाशम् ।** ) अयि भोः, पुरोडाशविक्रयिक, इत एहि ।

**विक्रयिकः** : (**चक्लिकामुखम्परिवर्त्योपसृत्य च ।**) आज्ञाप्यताम् । कति पुरोडाशाः कति च हैयङ्गवीनवेष्टनिकाः ?[3]

**पद्मावती** : कथम्पुरोडाशाः प्रदीयन्ते ?

---

१. अत्र पुरोडाशशब्दस्य 'bread' इत्यर्थोऽभिप्रेतः ।

२. 'Cycle' इति शब्दस्यार्थे 'चक्लिका' इत्येष शब्दोऽत्र प्रयुक्तः ।

३. 'मक्खन की टिकिया (कागज में लिपटी हुई)' इति भाषायाम् ।
Butter-cakes wrapped in paper इत्यांग्लभाषा ।

**विक्रयिकः :** द्विविधौ पुरोडाशौ । एकविध आणकत्रये अपरविधश्च आणकषट्के । कतरः प्रदीयेत ?

**पद्मावती :** आणकषट्कावक्रयो[1] दीयताम् ।

**विक्रयिकः :** अथ हैयङ्गवीनमपीष्यते ?

**पद्मावती :** कथन्तत् ?

**विक्रयिकः :** सार्द्धाणकत्रय एकविधा वेष्टनिका । आणकसप्तके चापरविधा ।

**पद्मावती :** तर्हि सप्ताणकावक्रया हैयङ्गवीनवेष्टनिकाऽप्येका दीयताम् ।

**विक्रयिकः :** अथ करपत्रिकया[2] दारितः पुरोडाशः स्याददारितो वा ?

**पद्मावती :** दारित एव सुष्ठु भवेत् ।

**विक्रयिकः :** अस्तु तर्हि । एष दार्यते । (**काष्ठत्सरुकामेकां[3] लघ्वीं निशितां च करपत्रिकां कोशाद् बहिर्निष्कास्य पुरोडाशमनेकेषु खण्डेषु दारयित्वा एकस्मिन् वंशपत्रवेष्टने[4] तं संनिवेश्य तेनैव साकं हैयङ्गवीनवेष्टनिकामप्येकां प्रयच्छति ।**)

**पद्मावती :** ( **उभयमपि गृहीत्वा ।** ) इमे त्रयोदशाणकाः ।

**विक्रयिकः :** ( **अवक्रयं गृहीत्वा ।** ) वरं प्रणम्यते । एष एव मे प्रथमो विक्रयः ।

**पद्मावती :** शुभोदर्कोऽस्तु तर्हि ते प्राभातिकः प्रथमविक्रयः ।

---

१. अवक्रयः='दाम' इति भाषायाम् ।

२. करपत्रिका='आरी जैसी छुरी' । Knife being used to slice the bread.

३. काष्ठत्सरुका='Wooden-handled' इत्यांग्लभाषा । 'काठ की मूँठवाली' इति भाषायाम् ।

४. 'बांस से तैयार होने वाले कागज के लिफाफे में' इति लोकभाषा ।

**विक्रयिकः** : प्रतिगृहीतं शुभोदर्कवचनम् ।

( **निष्क्रान्तः ।** )

( **नेपथ्ये ।** )

दैनिकं समाचारपत्रम् !

**पद्मावती** : (**स्वगतम् ।**) हन्त, समाचारपत्रविक्रयिकोऽपि समागतः ।
**(प्रविश्य समाचारपत्रविक्रयिकः समाचारपत्रमेकं सम्पुटीकृतं पद्मावतीगृह-वातायनमार्गेणान्तः प्रक्षिप्य निर्गतः । )**

**जयदेवः** : ( **समाचारपत्रसम्पुटपातध्वनिं श्रुत्वा ससम्भ्रमं शय्यामुज्झित्वा पद्मावतीमाकारयति ।** ) पद्मावति, समाचारपत्रमागतमिव । इतः प्रयच्छ ।

**पद्मावती** : ( **समाचारपत्रमुत्थाप्य समुद्घाट्य च छायाचित्रविज्ञापनानि वाचयति ।** )

**जयदेवः** : किं वाचयसि ? इतः प्रयच्छ । सत्वरं सत्वरम् ।

**पद्मावती** : मुहूर्त्तं स्थीयताम् । अहमादौ वाचयित्वाऽशेषमपि समाचारपत्रं, कृत्स्नमपि विशिष्टवस्तुजातम्भवते विनिवेदयामि । भवान् प्रातःकालिकं कृत्यजातं तावन्निर्वर्त्य समागच्छतु ।

**जयदेवः** : मैवम् । आदौ मया समाचारपत्रं वाचयिष्यते । इतोऽपि न वेगः शारीरिकः कश्चनाऽपि ।

**पद्मावती** : नायम्भवतः स्वभावो रोचते मह्यम् । इदानीमाचारकक्षः[1] स्वतन्त्रः । उत्थितेषु गृहस्वामिकुटुम्बेषु द्रागेव स तथा परतन्त्रो भवेद् यथा घण्टाद्वयं यावदपि तत्र प्रवेशावकाशो न लभ्येत ।

---

१. आचारकक्षः=Lavatory : शौचालयः । वात्स्यायनेन क्वापि शौचालयार्थे'माचारभूमि'रिति शब्दः प्रयुक्तोऽस्तीति तद्ग्रन्थपाठकेन मित्रेणैकेन सूचितः ।

चतुर्थम्

तदिदानीमेव वेगानुत्सृज्य स्नानादिकृत्यनिर्वर्त्तन एव मोक्षः। तदादावाचारकक्ष एव समाद्रियताम्। समाचारपत्रवाचनं तु परस्तादपि भविष्यति। उत्थीयतामुत्थीयताम्।

**जयदेवः** : (बाधां रूपयित्वा।) केयम्पीडा दैनन्दिनी! प्रत्यहमेष एवाग्रहः। अनुद्भूतेषु वेगेषु वेगोत्सर्जनं कथम्प्रतिपद्येत?

**पद्मावती** : अहम्भवतो हितकाङ्क्षयैव प्रत्यहम्प्रभाते भवन्तमेवमागृह्णामि। जनैराकीर्णे आचारकक्षे भवानेव दन्तान्निष्पेषयिष्यति कथमिमे वेगा धार्येरन्निति।

**जयदेवः** : (विहस्य।) एवं कस्मान्नोच्यते यत्समाचारपत्रपठनास्वादो दुस्त्यज इति।

**पद्मावती** : मत्तः समाचारपत्रस्याच्छेदनार्थमेव[1] सर्वदा श्रीमतः प्रणिधानम्। सर्वमवगम्यते। (विहस्य।) नाहमसम्पूर्णं पठित्वेदं भवते दास्यामि। अद्य तावद् बहूनि नूतनच्छायाचित्राणां विज्ञापनानि। कुत्र छायागृहे किं चित्रमिति सर्वं सम्यक्तया ज्ञात्वैव समाचारपत्रमिदं हस्तादपसारयिष्यते—ध्रुवमेतदवगन्तव्यम्।

**जयदेवः** : (सस्मितम्।) भर्त्तृपरायणया भर्त्तारमप्रदर्श्य समाचारपत्रं नैव पठितव्यमित्येष एव मनुप्रणीतो धर्ममार्गः।

**पद्मावती** : कुत्र मनुना तथा लिखितम्? लिखितमपि चेत्का न्विदानीं मनुप्रोक्तं वचः श्रद्धत्ते?

**जयदेवः** : भवती।

**पद्मावती** : अथ भवान्?

**जयदेवः** : स्त्रीणामेव कृते मनुप्रोक्तानि वचांसि न पुरुषाणां कृते।

---

१. आच्छेदनम्='छीनना' to snatch out इत्यर्थः।

पञ्चमम्

(इति हसति ।)

**पद्मावती :** शोभनोऽयं समुदाचारः पुरुषैराविष्क्रियते ! परं न वयं स्त्रियः पुरुषेभ्यः परिहीयामहे । अस्माभिरपि सुदूरं प्रास्तो मनुप्रणीत आचारप्रपञ्चः ।

**जयदेवः** : सुष्ठु शोभसे अनेन वाक्येन । (**विमृश्य।**) आम् । स्मृतम् । अद्य कार्यनिलयो द्रागेव गन्तव्यः । साधु तर्हि । प्रातःकृत्यान्येव प्रथमं निर्वर्त्तनीयानि । त्वमप्यावश्यक्यां क्रियायामभियुज्यस्व ।

**पद्मावती :** सम्पादिता एव सर्वाः क्रियाः । केवलं भवतो निर्वर्त्य प्रत्यागमनमेव विलम्बितमिति मन्यताम् ।

**जयदेवः** : वरं तर्हि । (**निर्गतः ।**)

**पद्मावती** : (**स्वगतम् ।**) सुप्रज्वलिताऽङ्गारशकटी[1] । यावत्पुरोडाशखण्डानेकैकशोऽङ्गारेषु निक्षिप्य अवतार्य तत्पृष्ठगतां श्यामिकामपाकृत्य हैयङ्गवीनांशेन च संम्रक्ष्यास्यां चीनमृत्स्थालिकायां[2] स्थापयामि । (**तथा कृत्वा पुनरपि स्वगतम् ।**) अङ्गारशकटी तावत्सावकाशा संवृत्ता । तदत्रैकस्मिन् बृहत्युदभाण्डके स्नानीयं जलं तापाय स्थापयामि, येन सम्यग्धग्धगायिता इमे अङ्गारा व्यर्था न भवेयुः । (**तथा कृत्वा पुनरपि स्वगतम् ।**) इदानीं कामरूपिकाकषायः[3] सम्पाद्यः । (**परिक्रम्य ।**) इदं तैलज्वालायन्त्रम्[4] । यावदस्योपर्येकस्मिन्पात्रे जनद्वयोपभोगपर्याप्तं पानीयं तापाय स्थापयामि । (**इति तैलज्वालायन्त्रं प्रवर्त्तयति । मुहूर्त्तं यावद् ज्वालायन्त्रस्य**

---

१. 'अँगीठी' इति लोकभाषायाम् २. 'चीनी मिट्टी की तश्तरी में' इत्यर्थः । ३. एष शब्दः 'चाय' tea इत्यस्य कृते स्वीकृतः । ४. अस्य शब्दस्य 'stove' इत्यर्थोऽभिप्रेतः ।

**भरात्कारध्वनिः श्रूयते । कंचित्कालं तूष्णीं स्थित्वा पुनरपि स्वगतम् ।)** सम्यक्क्वथितुमारभत पानीयमिदानीम् । यावदवतारयामि । (**परिक्रम्य ।**) अथेयं कषायधानी[१] । तस्यां कामरूपिकापत्रचूर्णं निक्षिप्य सुतप्तेन पानीयेन पूरणीया सम्यगाच्छाद्य चैकतः स्थापनीया । अस्मिन्पात्रके सिता न्यस्तव्या । अथेदानीं वर्धमानक[२]-स्तदाधारिका[३] च सम्यग्विशल्यीकृत्य[४] सज्जीकरणीया । चमसोऽप्येष विशल्यनीयः । (**तथा कृत्वा पुनरपि स्वगतम् ।**) इदमासनमास्तरणीयम् । (**परिक्रम्य ।**) अथ तैलज्वालायन्त्रकार्यं समाप्तम् । तदिदं शून्यीक्रियते[५] । (**तथा कृत्वा पुरतो विलोक्य स्वगतम् ।**) प्रत्यागतो जयदेवः । सर्वं संसिद्धमेव ।

**जयदेवः** : (**प्रत्यागत्य ।**) साधु-साधु । सम्यगुपनीतं प्रातराशवस्तु । एष उपविशामि । (**उपविश्य कषायधानीं समीपमाकृष्य तच्छदं समुत्सार्य चमसेन किंचित्सितां कषायपानीये निक्षिप्य तद्वर्णप्रकर्षणार्थं तस्मिंश्चमसं परिचालयति ।**) अहो, अद्य तावत्पुरोडाशस्य करपत्रिताः[६] खण्डा अपि सम्यगङ्गारिता हैयङ्गवीनेन च संम्रक्षितास्तिष्ठन्ति । किं वक्तव्यम् ! (**वर्धमानके कषायरसं क्षिप्त्वा तापितं दुग्धं सितां च योजयति । पुरतो विलोक्य ।**) पद्मावति, नूनं पठितं नाम त्वयाऽशेषमपि समाचारपत्रम् । अथ तदत्रोपानय ।

**पद्मावती** : (**समाचारपत्रं जयदेवहस्ते संक्रामयति ।**) अद्य 'द्वारिकायां' शोभनं चित्रं समागतं वर्त्तते । सायंसमये सत्वरमागम्यतां कार्य-

---

१. 'चायदानी' tea-pot इत्यर्थः । २. अस्य cup इत्येषोऽर्थः । ३. आधारिका=Saucer ४. विशल्यनम्=पानी से धोना । 'विसळ्णें' इति मराठीभाषायाम् । ५. निर्वाप्यते इत्यर्थः ६. Sliced इत्यांग्लभाषायाम् ।

निलयात् । अवश्यं द्रष्टव्यं तत् । सर्वथा सार्द्धपञ्चवादनवेलायां तस्यारम्भः । तत्पूर्वमेवागन्तव्यम् । आगंस्यते ?

**जयदेवः** : (**अनाकर्णितकं नाटयित्वा कामरूपिकाकषायमास्वादयन् ।**) अहोनैपुण्यं कषायनिष्पादनविद्यायाम् । पुरोडाशखण्डा अप्यास्वाद्यतराः । अवश्यं सुवचनीयाऽत्रभवती ।

**पद्मावती** : (**विहस्य ।**) आम्रान्पृष्टः कोविदारानाचष्टे[1] ! मयाऽनुयुज्यते[2] यदद्य छायाचित्रालोकनाय समागम्यते न वेति । कषायप्रशंसा नाऽनुयुक्ता ।

**जयदेवः** : अहो, छायाचित्रावलोकनेन किं स्यात्तद् यदास्वाद्यतरपुरोडाशभक्षणेन कामरूपिकाकषायपानेन च भवति । वस्तुनस्तारतम्यं परीक्ष्यैव त्वमेवं प्रत्युक्तासि ।

**पद्मावती** : आः किमुच्यतां प्रतिवचनपाण्डित्यं[3] भवतः । तथाप्यप्रत्युक्त एव ममानुयोगः ।

**जयदेवः** : य एष छायाचित्रनिबन्धनः[4] ?

**पद्मावती** : आम् ।

**जयदेवः** : (**सस्मितम् ।**) तर्हि किन्तत्र प्रतिवक्तव्यं येनाऽत्रभवती सुप्रीता स्यात् ?

**पद्मावती** : तदेव यच्छ्रीमते रोचते ।

**जयदेवः** : (**सुप्रसन्नवदनः सन् ।**) तदद्य सायं छायाचित्रावलोकनार्थमवश्यं गन्तव्यम् । अहमपि तथैव समुत्सुकोऽस्मि यथा त्वमसि ।

**पद्मावती** : (**आश्चर्यातिशयं रूपयित्वा सस्मितम् ।**) अद्भूतं श्रूयते—

---

१. 'पूछा कुछ जवाब कुछ' इति भाषायाम् । २. अनुयुज्यते=पृच्छ्यते । ३. उत्तरप्रदानकौशलमित्यर्थः ४. छायाचित्रसम्बन्धीत्यर्थः ।

सततं पञ्चभ्यः संवत्सरेभ्यो ममायमाग्रहः । नैव कदापि भवदङ्गीकारं गतः । अद्य नामैकपद एवाङ्गीकृतः । मन्ये जागतिकेषु सप्तस्वाश्चर्यपदेष्वष्टममाश्चर्यपदमेतद् यदद्य भवादृक्षश्छायाचित्रविलोकनवितृष्णो जन एकस्मिन्नेवानुरोधवाक्ये सतृष्णः समजायत ।

**जयदेवः** : इतोऽपि बहून्याश्चर्याणि श्रोष्यसि । अस्तु । परं कस्मिन् छायागृहे ?

**पद्मावती** : अत्याधुनिके सर्वसौविध्यसमन्विते 'द्वारिका'ख्ये छायागृहे । अवश्यमायास्यते न वा ?

**जयदेवः** : अवश्यम् । अवश्यमायास्यते । त्वया मात्रं समय एव सम्पादितबहिर्गमनवेशभूषया स्थातव्यम् । यतो हि तद्गृहं सत्वरमेवोपगन्तव्यमस्ति । महान् सम्मर्दस्तत्र प्रवेशशुल्कपत्रादाने लोकस्येति श्रूयते । निमेषस्यापि विलम्बः सङ्कल्पितकार्यवस्तुनो बाधां जनयेत् ।

**पद्मावती** : ( **विहस्य** । ) मत्तोऽप्यधिकतरं छायाचित्रगृहविषयकं ज्ञानं तु भावत्कमेव प्रतिभाति । अस्तु । भवदागमनात्प्रागेव सर्वं सम्पाद्य स्थास्यामि । तदा तु जातम् ?[१]

**जयदेवः** : एतद्वचनस्य ममायमेवाभिप्रायो यत्प्रायेण स्त्रीणां केशशृङ्गारे मुखरेणुरूषणे शाटकसंव्यानपरिधान एव सर्वोऽपि कालः समाप्तिं गच्छति । तस्मात्किंचित्सावधानया भवत्या वर्त्तितव्यमिति । ( **समाचारपत्रपृष्ठानि चालयित्वा** । ) अये, अद्य आकाशवाण्याः कार्यक्रमोऽपि समाचारपत्रे मुद्रितोऽस्ति । सपाद-

---

१. 'तब तो ठीक हो जायगा न ?' इत्याशयः ।

सप्तवादनवेलायामाकाशवाण्याः किन्दुबिल्वकेन्द्रात् सौभाग्यवत्या वसुन्धराया मुम्बापुरवास्तव्यायाः सङ्गीतानुष्ठानं स्मर्यते। तत्सम्प्रति सप्तवादनादूर्ध्वं द्वादश निमेषा मम मणिबन्धवेलायन्त्रके[1] संजाताः सन्ति। अथ ध्वनिप्रतिग्रहयन्त्रं[2] सत्वरं प्रवर्त्तय।

**पद्मावती :** (**सुप्रहृष्टवदना स्वस्थानादुत्थाय भित्तिफलकस्थं ध्वनिप्रतिग्रहयन्त्रं प्रवर्त्तयति।**) हन्त, मया तु विस्मृतमेवासीत्।

**जयदेवः :** कस्मान्न विस्मरिष्यसि—सुप्रियं यदद्य श्रुतवत्यसि ?

**पद्मावती :** गृहीतसुप्रियोदन्तः सर्व एव जन्तुर्हर्षपरिगृहीतचित्तः सन्नावश्यकमपि करणीयकृत्यजातं विस्मरति। एष तु साधारणो नियमः।

**जयदेवः :** आस्तां तावत्। अथ केन्द्रसंकेतनसूचिकां[3] कुत्र स्थापितवत्यसि? (**विलोक्य।**) इयं तु गोनर्दपुरकेन्द्रं संकेतयति। तस्मादपसार्य तां किन्दुबिल्वकेन्द्रमानय।

**पद्मावती :** तथा। (**इति प्रतिग्रहयन्त्रगतां केन्द्रसंकेतनसूचिकां यथानिर्दिष्टे स्थाने समायोजयति।**)

(**अथ किन्दुबिल्वकेन्द्रस्य ध्वनिः श्रूयते।**)

(**नेपथ्ये।**)

**केन्द्रोद्घोषकः :** इदमखिलजम्बूद्वीपीयाकाशवाण्याः किन्दुबिल्वकेन्द्रम्। इदानीमस्माकं पुण्येश्वरपुरकेन्द्रसंगीतानुष्ठात्री सौभाग्यवती वसुन्धरादेवी मुम्बापुरवास्तव्या देवताराधननिबन्धनं गीतं प्रस्तौति। तत्र तया महाकविजयदेवविरचितं दशावतारकीर्त्ति-

---

१. 'रिस्टवाच' इत्ययमस्य शब्दस्याभिप्रेतोऽर्थः।
२. 'रेडियो सेट' इत्यर्थः।
५. 'रेडियो की सुई' इत्यर्थः।

वर्णनं गीयते यस्येयं प्रथमा पंक्तिः––'प्रलयपयोधिजले धृतवानसि वेदम्' इति ।

(अथ तन्त्रवाद्यानां सुमधुरो रवः श्रूयते ।)

**जयदेवः :** (हर्षभूयिष्ठम् ।) अये, मदीयमेव गीतवस्तु प्रारभ्यते। पद्मावति, शृणु-शृणु । सम्यक्तदेकश्रवणा शृणु ।

**पद्मावती :** (सरोमाञ्चगद्गदम् ।) अस्मो[1], इदं किं भवदीयं वस्तु वसुन्धरादेव्या गीयते ? हन्त, कियानिवायमानन्दोदन्तः !

**जयदेवः :** ( आनन्दातिरेकद्योतकं कृतककोपं नाटयित्वा । ) रासभश्यालकाः खल्विमे किन्दुबिल्वकेन्द्रसंचालकाः। नाऽहं पूर्वमेव सूचितः पत्रेणाऽपि । मासचतुष्टयं जातं गीतस्यैतस्य ध्वनिक्षेपणार्थं[2] प्रहितस्य ।––आवेदनपत्रेण सार्धम् । यदि मया समाचारपत्रे वसुन्धरादेव्या नाम वाचयित्वा तस्या अनुष्ठानश्रवणार्थं त्वं न प्रयुक्ताऽभविष्यस्तर्हि मया मदीयं वस्तु श्रुतमेव नाऽभविष्यत् ।

**पद्मावती :** (सस्मितम् ।) परं भवता मामसंसूच्यैव प्रहितं तस्य फलमेतत् !

**जयदेवः :** सर्वं त्वां सूचयित्वैव करणीयमिति को नियमः ?

**पद्मावती :** ( लीलया । ) न कर्त्तव्यम्––एवमेव फलमपि लप्स्यते ।

**जयदेवः :** (तां वचनाद्विनिवार्य ।) निःशब्दा भव । वसुन्धरादेवी गीतं प्रारभते ।

(उभावपि तूष्णीकौ तिष्ठतः ।)

( वसुन्धरादेव्याः संगीतस्वनः श्रूयते । )

---

१. 'अम्ब भोः' इत्यस्याऽपभ्रष्टमाश्चर्यव्यंजकं रूपम् ।

२. ध्वनेः शब्दस्य क्षेपणं परितो विकिरणम् इति ध्वनिक्षेपणम् । Broadcasting' इत्यांग्लभाषा ।

(नेपथ्ये ।)

गीतम्——

"प्रलयपयोधिजले
धृतवानसि वेदम्,
विहितवहित्रचरित्रमखेदम् ।
केशव,
धृतमीनशरीर,
जय जगदीश, हरे ! ॥"

**जयदेवः** : आः कियानिव श्रुतिमनोहरः कण्ठरवो वसुन्धरादेव्याः !

**पद्मावती** : नूनं हृदयमिदं परवदिवाकृष्य नीयते। भवदीयः शब्दप्रयोगो वसुन्धरादेव्याश्च सुमधुरः स्वरान्दोलः——उभयमपि रत्नकाञ्चनसंयोगं जनयति। धन्यो भवान् धन्या च वसुन्धरादेवी ।

**जयदेवः** : केवलमेकमेव नैयून्यमुपलक्ष्यते। 'विहितवहित्रचरित्रमखेदमि' त्यत्र 'चरित्र'शब्दे 'रि' इत्येतस्य स्थानेऽपि 'हि' इत्येव समागमिष्यच्चेदधिकतरं श्रवणरुचिमजनयिष्यत्। पुष्कलं प्रयतितं मया परं 'हित्र'ध्वनिकः प्रसक्तविषयानुकूलः संस्कृतशब्द एव नोपालभ्यत ।

**पद्मावती** : किमत्र बहुना विचिन्तितेन ? पूर्वजनैः प्रयुक्तः शब्दो नोपलभ्येत तर्हि कश्चन नूतनः शब्दो निर्मीयेत । कश्चनापि 'कहित्र'—'गहित्र'–'जहित्र'—'दहित्र'–'नहित्र'—'महित्र'—'रहित्र'—'सहित्र' इत्येवम्प्रकारकः । एकदा काव्याख्ये वस्तुनि कविना प्रयुक्तः शब्दस्तदा स पाठकैः केनाप्यर्थेन स्वयमेव

संयोज्यते । कश्चनापि प्रसङ्गगतोऽर्थस्तत्र निपात्यते । तस्मादाद्यैः कविभिरस्मिन् वस्तुनि भूयसी चिन्ता न कार्या । 'ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावती'त्येष न्यायः सर्वदैव जागर्ति ।

**जयदेवः** : अयमुपदेशस्तत्रैव तिष्ठतु । मम गीतं पलायितमिव प्रतिभाति । श्रुतमपि सर्वं त्वयाऽश्रुतं विहितम् । मुहुर्त्तं यावत्तूष्णीं भव ।

**(वसुन्धरादेव्याः संगीतस्वनः पुनरपि श्रूयते ।)**

**(नेपथ्ये ।)**

''वसति दशनशिखरे
धरणी तव लग्ना—
शशिनि कलंककलेव निमग्ना ।
केशव,
धृतशूकररूप,
जय जगदीश, हरे ! ॥''

**पद्मावती** : अवर्णनीयं माधुर्यम् । अहह, किमुच्यताम् !

**जयदेवः** : मन्ये वसुन्धरादेव्या मम साधारणेऽपि गीतवस्तुनि प्राणाः संचारिताः !

**पद्मावती** : एवं क्रियताम् । वसुन्धरादेवी स्वगृहे निमन्त्र्यताम् । अहं तां सत्करिष्यामि ।

**जयदेवः** : सुचिन्तितो विचारः । ममाप्येतादृशमेव मनः । अद्यैव प्रयते ।

**पद्मावती** : 'प्रयते' इत्येतस्य कोऽर्थः ? अस्माकं प्रतिवेशिनां गृहे

दूरसम्भाषयन्त्रं[1] परह्य एव संस्थापितम् । तत्र गत्वा तेन यन्त्रेण आकाशवाण्याः केन्द्रस्थाः कर्मकृतः सम्प्रत्येव सूच्यन्तामेतस्मिन् विषये । अथवा अनुष्ठानपरिसमाप्तौ यदा सा पारिश्रमिक-प्रतिग्रहणार्थं कृत्यपरिचालनकक्षे[2] अनुष्ठानकक्षात्[3] प्रत्या-गमिष्यति तदा सैव दूरसम्भाषेण भाषितव्या ।

**जयदेवः :** बाढम् । सुकर उपायः । अधुनैवाश्रयिष्यते ।

**पद्मावती :** परिसमाप्तं गीतम् । अथ तूष्णीं स्थित्वा उद्घोषकस्य घोषणावाक्यं श्रूयताम् ।

**(उभावपि तूष्णीं तिष्ठतः । )**

**(नेपथ्ये ।)**

**केन्द्रोद्घोषकः :** इदानीमेव भवद्भिरस्माकं पुण्येश्वरपुरकेन्द्रसंगीता-नुष्ठात्र्या सौभाग्यवत्या वसुन्धरादेव्या मुम्बापुरवास्तव्यया प्रस्तुतं महाकविजयदेवविरचितं दशावतारकीर्तिवर्णनाख्यं गीतं श्रुतम् । इदमाकाशवाण्याः किन्दुबिल्वकेन्द्रम् । एत-दनन्तरः कार्यक्रमः कतिपयैरेव क्षणैः प्रस्तुतो भवद्भिराकर्ण-यिष्यते ।

**पद्मावती :** नूनमेतस्मिन्नायुषि प्रथमोऽयमवसरो यदाऽहं भवदीयम-भिधानमाकाशवाण्याः केन्द्रेण ध्वनिक्षिप्तमाकर्णयामि । चिररात्राय मनस्येव संवर्धिता मदीयाऽऽकांक्षा एवमद्य पूर्तिं गता । धन्यास्मि ।

---

१. 'Telephone' इत्यर्थः ।

२. 'Duty-Room' इत्यस्य कृते प्रयुक्तः शब्दः ।

३. 'Studio' इत्येतदर्थकः शब्दः ।

**जयदेवः** : एष तवानुभावः[1] । अहं तावत्तव चरणचारणः । तथ्यमिदं मयैकस्मिन् श्लोके कथमुपनिबद्धं तच्छृणु ।—

"वाग्देवताचरितचित्रितचित्तसद्मा,
पद्मावतीचरणचारणचक्रवर्त्ती,
श्रीवासुदेवरतिकेलिकथासमेत—
मेतं करोति जयदेवकविः प्रबन्धम् ।"

**पद्मावती** : (**सस्नेहं सस्मितं च चक्षुर्व्यापारं नाटयित्वा ।**) नूनं धूर्त्तो भवान् । पत्नीमसूचयित्वैव कार्यं विधीयते ।

**जयदेवः** : (**विमृश्य ।**) अस्तु । सम्प्रति दूरसंभाषणार्थं गम्यते । स्नानीयं जलमितोऽप्यनुष्णमेवास्ति । आगत्य स्नानं विधास्ये । त्वमपि शाकादिपरिक्रयार्थं शाकमण्डिकां[2] गच्छ । अद्यास्वाद्यविशेषः कश्चन पाकप्रकारः सम्पाद्यताम् ।

**पद्मावती** : (**सस्मितम् ।**) अवश्यमवश्यम् । तथाविधं सम्पादयामि यथाविधं पाकप्रकारं विलोक्यैव भवदीयं मनो हृष्टं प्रसन्नं च स्यात् । यथोक्तं मनुनाऽपि—'दृष्ट्वा हृष्येत्प्रसीदेच्चे'ति ।

**जयदेवः** : (**विहस्य ।**) समीचीनम् । मनुप्रोक्तः सर्व आचारप्रपञ्चस्तु सुदूरं प्रास्त आसीत् । इदानीं भवदुक्तस्य तस्य किम्प्रतिपन्नम् ?

**पद्मावती** : अस्माकं तावदेष नियमः—'गुडं तु प्रतिगृह्णीयान्मृत्पिण्डं दूरतः क्षिपेदि'ति ।

---

१. अनुभावः प्रतापः ।

२. शाकादिवस्तुविक्रयार्थं स्थिरीकृतः स्थानविशेषः । 'सब्जी-मण्डी' इति लोकभाषा ।

(नेपथ्ये ।)

शाकं गृह्यतां शाकम् !—वीरसेनकं शाकम्[1] , पुष्पगोजिह्वाशाकम्[2], ताम्रभण्टाकीफलं शाकम्[3], पालक्याशाकम् ![4] शाकं गृह्यतां भोः शाकम् !!

**जयदेवः** : आः शाकविक्रयिकाऽपि सम्प्राप्ता त्वदर्थमत्रैव । पश्य, कीदृशो दीर्घसूत्रिषु देवस्याऽपि पक्षपातः !

**पद्मावती** : तदर्थं प्राक्तनजन्मनि प्रभूतः सुकृतसञ्चयः करणीयो भवति। वरं गम्यते—अम् ।

**(इति परस्परं स्मयमानावुभावपि यथाभिप्रेतां दिशं निष्क्रान्तौ ।)**

इति प्रथमः संवादः ।

---

१. आलू (Potato) का साग ।

२. फूल-गोभी (Cauliflower) का साग ।

३. टमाटर (Tomato) का साग ।

४. पालक (Spinach) का साग ।

## प्रथमं दृश्यम् ।

( ततः प्रविशति पल्यङ्कस्थो ध्वनिप्रतिग्रहयन्त्रादाकाशवाण्या वीणावादन-कार्यक्रमं शृण्वन् कोकिलाक्षः पाककर्मणि संलग्ना कोयष्टिका च । )

**कोकिलाक्षः** : वा:-वा: कीदृशोऽयं देशकारराग: ! स च वीणाया: कोमलतरेषु तन्त्रस्वरेष्वारोप्य ध्वनिक्षिप्तो भवति । हन्त, माधुर्यस्य परा काष्ठा संजायते । (क्षणं यावच्छ्रवणं नाटयित्वा ।) आ:, रागस्य विलम्बितगात्रादिदानीं द्रुतगात्रे प्रविश्यते वीणावादकेन । नूनं शब्दश: परा काष्ठा संजाता परा काष्ठा । (मुहूर्त्तं यावत्तालबन्धमनु शिरःसन्धुननं तत्कालसहजमवयवपरिचालनं च नाटयित्वा ।) कोयष्टिके, शृणु-शृणु । कीदृशं मधुरमिदं वीणावादनम् ! वा:-वा: ! (श्रवणसमाधिं नाटयति ।)

(क्षणानन्तरमाकाशवाण्या वीणावादनकार्यक्रमः समाप्तिं गच्छति !)

**कोकिलाक्षः** : हन्त, समाप्तं किं वीणावादनम् ?

(नेपथ्ये ।)

**आकाशवाण्युद्घोषकः** : हम दिल्ली से बोल रहे हैं। इस समय सवेरे के नौ बजा चाहते हैं । हमारी पहली सभा समाप्त होती है । साढ़े बारह बजे हमारी दूसरी सभा बहनों के कार्यक्रम से आरम्भ होगी । तब तक के लिये हमें आज्ञा दीजिये ।

(अथ आकाशवाण्या ध्वनिक्षिप्तो नववादनसूचको घंटाध्वनिः श्रूयते ।)

**कोकिलाक्षः** : (समाधिभङ्गं रूपयित्वा स्वगतम् ।) हन्त, नववादनं भवति

किम् ? ( **उत्थाय प्रतिग्रहयन्त्रं शून्यीकृत्य[1] कोयष्टिकामुद्दिश्य ।** )
कोयष्टिके, पाकस्य का प्रवृत्तिः ? नववादनवेला तु संजाता । द्रुतमेव कार्यनिलयं प्रति गन्तव्यम् ।

**कोयष्टिका :** (**मुखं परिवर्त्य ।**) जातः किं श्रवणसमाधिभङ्गः ? उत्थीयताम् । स्नानादिकं निर्वर्त्य समागम्यताम् । सम्पन्न एव पाक इत्यवगन्तव्यम् । पञ्च निमेषाः पर्याप्ता भविष्यन्ति मम क्रियापूर्त्तौ ।

**कोकिलाक्षः :** (**अपसव्येन करेण स्वकीयं मुखमंडलमामृशन् कोयष्टिकामुद्दिश्य ।**) हन्त भोः, अद्य तावत् क्षौरमपि कर्त्तव्यम्भवति । विस्मृतमेव मयाऽऽकाशवाणीकार्यक्रमश्रवणैकपरतन्त्रचेतसा । तस्मात् क्षौरस्य सर्वमप्यावश्यकं सामग्रीजातं द्रुतमुपानय । स्नानं पश्चात् करिष्यामि । आदौ तावदेषा क्षुरक्रिया सम्पन्ना भवतु ।

**कोयष्टिका :** (**विहस्य ।**) आः, क्षौरमपि नाऽनुष्ठितम् ? अथेदानीं प्रारब्धायाः क्षुरक्रियायाः कदा नाम परिपूर्त्तिः स्यात् ? सर्वत्राऽस्मिन् विलम्बाचारेऽहमेवोपालब्धा भवामि । करोति भवान्, उपालम्भभाजनं भवाम्यहम् । स्वकृतकार्यापराधस्य—
(**इत्यर्धोक्ते ।**)

**कोकिलाक्षः :** (**मध्य एव विनिवार्य ।**) मैवं वेलाविनाशं कार्षीः । सत्वरमुपानय क्षौरसाधनानि ।

**कोयष्टिका :** (**भ्रूसंकोचं नाटयित्वा ।**) तान्यपि मयैवोपानेतव्यानि ? एष मम कार्यविभागः श्रीमतो वा ? अन्विष्यतां कुत्र पातितानि क्षौरसाधनानीति । नाहं मुहूर्त्तमपि स्वस्थानादपसर्त्तुं शक्नोमि । कीदृशं मे पाकस्य कार्यगौरवमिति नैव दृश्यते किम् ?

---

१. शून्यीकरणम् = क्रियाविरहत्वापादनम् ।

**कोकिलाक्षः** : (**बाधां रूपयित्वा ।**) कुत्रान्विष्येयम् ? क्षौरोपकरणपेटी न जाने कुत्र विनष्टा। न तस्याः कुत्रापि प्रवृत्तिमुपलभे। त्वमेव निर्दिश मे कुत्र सा स्थापिता भवेदिति ।

**कोयष्टिका** : (**मुखं परिवर्त्य ।**) वंशवस्तुनिधानिकायाः[1] प्रथमे खण्ड-फलके, यत्र भवता पुस्तकानि स्थापितानि, तत्रान्विष्यताम्। कदाचित् पुस्तकानां पृष्ठभागे सा निलीना स्यात् ।

(**कोकिलाक्षस्तथा करोति । तत्रैव सोपलब्धा भवति ।**)

**कोकिलाक्षः** : अस्तु नाम। प्राप्ता सा तपस्विनी । अथाऽऽदर्शः[2] कुत्र ? सत्वरं निर्दिश ।

**कोयष्टिका** : (**सस्मितम् ।**) पृष्ठतो विलोक्यताम्। भित्तिकीलकमालब्य तिष्ठत्यादर्शः ।

**कोकिलाक्षः** : ( **मुखं परिवर्त्याऽऽदर्शं पश्यति । हस्ते तमादाय ।** ) लब्ध आदर्शः । अथ क्षौरार्थं कुत्राऽऽस्यताम् ?

**कोयष्टिका** : इयं काष्ठोपवेशनी[3]। अयं च काष्ठचतुष्पादकः[4]। तत्तत्र चतुष्पादके आदर्शं संस्थाप्य तस्यैव पुरस्तादुपवेशन्यामुपविश्य क्षौरं सम्पाद्यताम् । इदमपि किं सर्वं मयैवोपदेष्टव्यम् ?

**कोकिलाक्षः** : ( **तथा कृत्वोपकरणपेटीमुद्घाट्य मुण्डित्रे[5] निशितामेकां धातु-पत्रिकां[6] निवेश्य श्मश्रुचिबुककेशमुण्डनक्रियाऽऽरम्भं नाटयति । किंचिद्**

---

१. 'बांस का बना रैक' इत्ययमर्थोऽभिप्रेतः ।

२. दर्पणम् । 'आरसा' इति मराठीभाषायाम् ।

३. 'लकड़ी की कुर्सी' इत्ययमर्थः ।

४. 'लकड़ी की मेज' इत्ययमर्थः ।

५. मुण्डित्रम् = 'रेज़र' इत्यर्थः ।

६. धातुपत्रिका = 'ब्लेड' इत्यर्थः ।

विशम्

**बाधां रूपयित्वा कोयष्टिकामुद्दिश्य ।)** अद्य त्वया न सम्यगुष्णमिदं पानीयमस्यां पात्र्यां निक्षिप्तम् । पल्यूणं[1] चैतन्न सम्यक्चिबुके लिप्तं भवति । पल्यूणकूर्चकोऽपि[2] यथा तथैव । न जाने कदा वा चिबुकमिदं सम्यक् सञ्जातक्षौरं भविष्यति । केशा अपि मम चिबुके तथा प्रखरा यथा न धातुपत्री तेषां खण्डने क्षमा । समयस्तु पलायमान इव केशा नाम मे चिबुकस्य तथैव सुदृढं स्वस्थाने दण्डायमानाः । न लेशेनाऽपि स्वस्थानपरित्यागाय प्रसीदन्ति । सर्वोऽप्ययं तवैवानुभाव इति तर्कयामि ।

**कोयष्टिका :** **(पुनरपि विहस्य ।)** पुरुषाणां याः क्रियाः फलवत्यस्तास्तु तेषामेवानुभावाद् याश्च न फलितास्ताः स्त्रीणामनुभावादिति शोभनोऽयं नियमः पुरुषैराविष्क्रियते । क्षौरविद्यायामपाटवं स्वकीयमस्माकमेव शीर्षेषु निपात्यते । हन्त भोः, कियदिदं व्यवहारनैपुण्यं पुरुषसमाजस्य ।

**कोकिलाक्षः :** **(चिबुकं पुनरपि पल्यूणेन संलिप्य ।)** आस्तामयं तत्त्वोपदेशः । **(क्षौरसंभ्रमं नाटयित्वा ।)** पश्य सुचिक्कणं मुण्डितं मया चिबुकं न वेति द्राक्च सर्वं निष्पादितं न वेति । कीदृशं मे हस्तलाघवं चिबुककेशमूलोत्पाटने—सुनिपुणं निभाल्यतामिदानीम् । **(क्षौरं समाप्य चिबुकं कपोलमुत्तरोष्ठं च करतलेनाऽऽमृशन् ।)** भवतु । छिन्नाः केशाः । स्वच्छतां नीतश्चायमुत्तरोष्ठपट्टः । साधु-साधु । ईदृशेन मुण्डित्रेण ईदृश्या च निशितया धातुपत्रिकया भाव्यं, येनाऽविलम्बमेव—निमेषद्वयेनैव—कृत्स्नमपि क्षौरकार्यं सम्पूण

---

१. 'Soap' इत्यर्थः ।

२. 'Shaving brush' इत्यर्थः ।

स्यात् । (विचिन्त्य ।) अथ स्नानार्थं गम्यते । कुतो मे अंग-प्रोञ्छनं[1] —कुतोऽन्तरंगिका[2] —कुतश्चाधोऽङ्गकः ?[3] सत्वर-मुपपाद्यताम् । एष स्नानं कृत्वा—द्विनिमेषस्नानं कृत्वाऽऽगच्छामि ।

**कोयष्टिका :** स्नानगृहे गत्वाऽवलोक्यताम् । सर्वाण्यपि वस्त्राणि चिररात्राय तत्रैव श्रीमन्तं प्रतिपालयन्ति प्रतीक्षन्ते च तत्र भवदा-गमनम् । तत्रत्ये नागदन्तके[4] सर्वाण्यपि तानि भवद्दृष्टिपथमुप-यास्यन्ति ।

**कोकिलाक्षः :** शोभनं-शोभनम् । जानासि स्वकीयं कार्यव्यापारं नाम ।

(**इति निष्क्रान्तः ।**)

**कोयष्टिका :** (**स्वगतम् ।**) इतरत्तु सर्वं परिसमाप्तम् । अथ चाणक्य-मूलकस्य[5] गृञ्जनस्य[6] च खर्जो[7] निर्मातव्यः । यावत्कक्षान्तरं गत्वा खर्जनीमानयामि[8] ।

(**इति निष्क्रान्ता ।**)

इति द्वितीये संवादे प्रथमं दृश्यम् ।

---

१. 'अँगोछा' इति भाषायाम् ।

२. अन्तरङ्गिका='बनियाइन' इति भाषायाम् ।

३. अधोऽङ्गकः=कच्छा, underwear इत्यांग्लभाषायाम् ।

४. नागदन्तकः='खूँटा' इति भाषायाम् ।

५. चाणक्यमूलकम्='छोटी मूली' इति भाषायाम् ।

६. गृञ्जनम्='गाजर' इति भाषायाम् ।

७. खर्जः='कस' इति भाषायाम् ।

८. खर्जनी=खर्जनसाधनम् । 'कद्दूकस' इति भाषायाम् ।

## द्वितीयं दृश्यम् ।

(नेपथ्ये स्नानागारस्थसहस्रधारतुषारयन्त्रस्य जलनिर्झरणध्वनिस्तदधस्तात्स्थित्वा निर्भरं स्नानानन्दमनुभवतः कोकिलाक्षस्य तत्कालसहजगीतध्वनिश्च श्रूयते ।)

गीतम्—केदाररागे द्रुतलयेन गीयते ।

"क्वाऽसि हे चारुहासिनि,
हृदयनिवासिनि, लोकविकासिनि,
क्वाऽसि हे चारुहासिनि, ! ।।ध्रुवम्।।
अस्मि तवैव सुमुखि हे, दासः;
त्वत्पदकमलतले कृतवासः ।
क्वाऽसि हे चारुहासिनि ? ।।"

(प्रविश्य ।)

**कोयष्टिका :** (दृढपिहितस्नानगृहद्वारकपाटघट्टनं नाटयित्वा ।) अयि भोः, काऽपि वेलाऽत्रभवतः स्नानार्थं गतस्य । कृपया त्वर्यताम् । भोजनम्परिवेषितमनुष्णतां भजते । इदं स्नानगृहसंगीतमत्रैवाऽवसीयताम् ।

(नेपथ्ये तथैव गानमारब्धं श्रूयते ।)

**कोयष्टिका :** अपि श्रूयते मद्वचनम् ?

(गानं तथैव प्रवृत्तं श्रूयते ।)

**कोयष्टिका :** (इतोऽप्यधिकं घट्टनध्वनिं जनयित्वा ।) समाप्यतां स्नानम् । वेला संजाता ।

(नेपथ्ये स्नानं समाप्य तुषारयन्त्रं शून्यीकृत्याऽङ्गप्रोञ्छनेन गात्रमनार्द्रीकुर्वतः कोकिलाक्षस्य तत्कालसाहजिकाः सम्भ्रमध्वनयः श्रूयन्ते ।)

**कोयष्टिका :** (बाधां रूपयित्वा ।) अहं तु परिपीडिताऽस्मि ।

(नेपथ्ये कोकिलाक्षः पृच्छति ।)

किमुपदिष्टवती श्रीमती ? पुनरप्युपदिशतु ।

**कोयष्टिका :** कृपया समाप्यतां सर्वोऽपि स्नानाचारः । भोजनार्थमुपस्थीयताम् ।

(नेपथ्ये ।)

बाढम् । एष आगतः ।

(ततः प्रविशति निर्वर्त्तितस्नानाचारः कोकिलाक्षः ।)

**कोकिलाक्षः :** का वेला साम्प्रतं घटिकायाम् ?

**कोयष्टिका :** केवलं विंशतिर्निमेषा अवशिष्यन्ते दशवादनवेलायाम् ।

**कोकिलाक्षः :** आः, विंशतिर्निमेषाः ? इयं तु मन्ये गुर्वी मात्रा । एष निमेषत्रयेण भोजनक्रियां परिसमापयामि । मैवं भेतव्यम् । (विचिन्त्य ।) इदमन्तरङ्गवस्त्रयुगलं केन प्रक्षालयिष्यते ? त्वया वा मया वा ? (क्षणं विरम्य ।) भवतु । प्रक्षालयाम्येवाहम् ।

**कोयष्टिका :** (प्रहासेन हस्ताञ्जलिं बद्ध्वा ।) कृपया नायमनुग्रहो वस्त्रप्रक्षालनस्येदानीं करोतु मयि श्रीमान् । यदा पुष्कलः समयो भवति, तदा तु नेदं कार्यमाद्रियते । यदा नाम खलु समयस्याभावस्तदा प्रचुरमुपदर्श्यत उत्साहः श्रीमता । सम्यगवैमि श्रीमतो वस्त्रप्रक्षालनात्पिण्डमोचनचातुर्यम् । इदानीं तत्सर्वं तथैव तिष्ठतु ।

पश्चान्मयैव स्वयं प्रक्षालयिष्यन्ते वस्त्राणि। नूनं प्रशंसनीयः खलु पुरुषाणामेष कार्योत्साहः। किमुपवर्ण्यताम्!

**कोकिलाक्षः :** (हसन्।) द्रष्टुकामा चेद्भवती मम प्रक्षालनकार्योत्साहमिदानीमप्येकेनैव निमेषेणोभयमपीदं झटित्येव प्रक्षाल्याऽपासितुं शक्नोमि।

**कोयष्टिका :** तिष्ठत्वयमुत्साहातिरेकः। जानामि भवतः प्रक्षालनपाण्डित्यमपि। विनाऽपि पल्यूणनिवेशनं केवलं प्रणालस्याधस्ताज्जलस्य धारायां निक्षिप्याऽऽकृष्य निष्पीड्य च तथैव वस्त्राणीमान्येकतोऽपास्तानि भवेयुः। को लाभ ईदृशेन प्रक्षालनेन?

**कोकिलाक्षः :** भवतु-भवतु। नाऽहमिदानीं विवादाय समयं लभे। भोजनं तावत्परिवेषय।

**कोयष्टिका :** परिवेषितपूर्वमेव। केवलं तस्योदरस्थीकरण एव विलम्बोऽस्ति।

**कोकिलाक्षः :** (सम्भ्रमं रूपयित्वा।) आः, एष निगिलामि। यथा द्विनिमेषस्नानं, तथैव द्विनिमेषभोजनमपि मम। शासनकार्यनिलयनियुक्तकानामस्मादृशानां तपस्विनां को नाम प्रातर्भोजने रसग्रहणादरः?

**कोयष्टिका :** अत्र नाऽस्ति शासनयन्त्रस्य लेशमात्रेणाऽपि वचनीयता। यूयमेव वचनीयाः खलु। गृहिण्या सप्रयत्नं निष्पादितेष्वपि सुस्वादुपाकप्रकारेषु यदि यूयमेवाऽऽलस्यवशात् कार्यान्तराणि वेलायामसम्पाद्य भोजनार्थमावश्यकीं वेलां नैव पश्यथ, तर्हि कथमन्ये जना वचनीयाः स्युः? अस्तु। त्वरितमागम्यतामास्वाद्यतां

चोष्णोष्णानि भोज्यवस्तूनि। अद्य भवत्प्रिय आढक्याः सूपः[1] सम्यङ् नवनीतेन घृतेन[2] जीरकसिद्धार्थकाभ्यां[3] रामठचूर्णमात्रया[4] च संस्कृत्य[5] परिवेषितस्तिष्ठति।

**कोकिलाक्षः** : अन्यत्किङ्किमस्ति निष्पादितम् ?

**कोयष्टिका** : पत्रशाके वास्तूक[6]तण्डुलेरकयोः[7] शाकम्; फलशाके सवीरसेनकं लघुवृन्ताकम्[8]; चाणक्यमूलकगृञ्जनयोः खर्जः; स्थूलवर्त्तुलवृन्ताकस्य भर्जः[9]; सोपस्करभृष्टतिलभूमुद्गबालनारिकेलहरितमरिचशृङ्गवेरकुस्तुम्बुरुजम्बीररसपरिपेषनिर्वृत्ता[10] लेह्या[11]—किं-किं वर्णयामि ? तप्तकादवतार्य[12]ज्वलिताङ्गारेषु निक्षिप्य सम्यक्परितो भङ्गुरं सेकिताः प्रत्यग्रपेषितसर्वश्रेष्ठ-

---

१. आढक्याः सूपः='अरहर की दाल' इति भाषायाम्।

२. नवनीतं घृतम्='मक्खन का ताज़ा घी' इति भाषायाम्।

३. जीरकः='जीरा'; सिद्धार्थकः='सफेद सरसों' इति भाषायाम्।

४. रामठचूर्णम्='पिसा हुआ हींग' इति भाषायाम्।

५. संस्कृत्य=भावयित्वा। 'छौंककर' इति भाषायाम्।

६. वास्तूकम्='बथुआ' इति भाषायाम्।

७. तण्डुलेरकः='चौलाई' इति भाषायाम्।

८. वृन्ताकम्='बैंगन' इति भाषायाम्।

९. भर्जः='भुरता' इति भाषायाम्।

१०. उपस्करः='मसाला'; भूमुद्गः=बुध्नशिम्बा। 'भुईमूग' इति मराठीभाषायाम्, 'मूंगफली' इति हिंदी भाषा; शृङ्गवेरम्='अदरख'; कुस्तुम्बुरुः='कोथिंबीर' इति मराठीभाषायाम्; 'हरा धनिया' इति हिंदी भाषा।

११. लेह्या='चटनी' इति भाषायाम्।

१२. तप्तकः=ऋजीषम्। 'तवा' इति भाषायाम।

पञ्चनदगोधूमपिष्टविनिर्मिता घृतसिक्ताः सुप्रफुल्ला गोलाकाराः पोलिकाश्च[1]......(इत्यर्धोक्ते ।)

**कोकिलाक्षः :** (मध्य एव विनिवार्य ।) विरम-विरम । आस्तामयं स्वकृत-पाकस्य वर्णनोत्साहः । अन्यथा श्रवणमात्रेणैव पूरिते जठरे, पिण्डेन तस्य पूरणं कठिनं स्यात् । (इति हसति ।)

**कोयष्टिका :** आगम्यतां त्वरितम् । परिवेषिता स्थालिका[2] सस्पृहं भवदुपस्थानं प्रतीक्षमाणा तिष्ठति ।

**कोकिलाक्षः :** नूनं गृहिणी नाम सा, या 'कोयष्टिके'त्याख्यां स्वसूप-शास्त्रप्रावीण्येन भर्त्तृभक्त्या च सम्यगभिभूषयति । अन्यास्तु केवलं शब्दमात्रेणैव गृहिण्यः ।

**कोयष्टिका :** पुष्कलं संजातं पत्नीगुणोपाख्यानम् । इदानीं तूष्णीं भूत्वा भोजनार्थमागम्यताम् । कार्यनिलयात्परावृत्य पुष्कलः कालो लब्धा श्रीमता पत्न्याः प्रशंसार्थम् ।

**कोकिलाक्षः :** आ एतेन कार्यनिलयशब्दग्रहणेन ते तावदिदानीं किमपि स्मरामीव ।

**कोयष्टिका :** किं तत् ?

**कोकिलाक्षः :** (क्षणं यावत्स्मृतिं नाटयित्वा ।) शृणु । अद्य वासरः कः ?

**कोयष्टिका :** न ज्ञायते किमेतावदपि ? अद्य हि भौमवासरः । तत्रा-ऽवलोक्यताम् । तत्र भित्तिकीलकमालम्ब्य तिष्ठति वासराऽऽ-दर्शः ।[3]

---

१. 'पोळ्या' इति मराठीभाषायाम् । 'फुलके' इति हिंदीभाषायाम् ।

२. स्थालिका='थाली' इति भाषायाम् ।

३. वासरादर्शः=दिन-दर्शः । 'Calendar' इत्यांग्लभाषायाम् ।

**कोकिलाक्षः** : त्वयि संक्रान्तज्ञातव्याज्ञातव्यविवेकभारस्य कलत्रसचिवस्य मे किमेतया प्रत्यहं वासराऽऽदर्शदर्शनशीर्षवेदनया ? अस्तु । शृणु ।—(इत्यर्धोक्ते ।)

**कोयष्टिका** : (मध्य एव विनिवार्य ।) किमस्त्यपरं श्रोतव्यम् ?

**कोकिलाक्षः** : भौमवासर इति भणितवत्यसि न वा ? तस्मात्कुतोऽद्य कार्यनिलयः ? कस्मादपि कारणविशेषादद्य कार्यनिलयस्याऽस्मदीयस्य मोक्षः[1] स्मर्यते । तद्विक्रीतविक्रेतव्यस्येव विक्रयिकस्य सुखस्वापमुत्सृज्य वृथैव मया क्षौरस्नानादिसम्भ्रमो विहितः ।

**कोयष्टिका** : शोभनं सञ्जातं नाम । कार्यनिलयगमनभ्रमसंभ्रमाद् द्रागेव सम्पादिताखिलनैत्यिकाचारः कृतोपकार इवैव मयि श्रीमान् । अद्य सुनिश्चितं बहिर्गन्तव्यमावाभ्यां नूतनच्छायाचित्रावलोकनप्रीत्यर्थम् ।

**कोकिलाक्षः** : (स्वगतम् ।) हन्त, न मया साधु समाचरितमेतद्विज्ञाप्यैतस्यै कार्यनिलयमोक्षस्याद्यतनस्य । औदरिकस्याऽभ्यवहार्य इवैतत्कालिकस्य गृहिणीजनस्य सर्वत्र छायाचित्रावलोकनमयमेक एव विषयः । (प्रकाशम् ।) आः, सुरुचिरं भणसि । निर्दिश तावत्स्वयम्पाकगृहस्य मार्गम् ।

**कोयष्टिका** : (सप्रहासम् ।) विस्मृतस्वयम्पाकगृहमार्ग इत इतोऽत्रभवान् ।

(इत्युभावपि स्मयमानौ निष्क्रान्तौ ।)

इति द्वितीये संवादे द्वितीयं दृश्यम् ।

इति द्वितीयः संवादः ।

---

१. मोक्षः='छुट्टी' इति भाषायाम् ।

( ततः प्रविशति पिप्पलादः कार्यनिलयम्प्रति यातुमुद्यतस्तज्जनकः सहस्र-पत्रकस्तत्सहोदरी कुज्झटिका च । )

**पिप्पलादः** : (दक्षिणं हस्तमुद्यम्य ।) तात, टा ऽऽ टा ऽऽ ।

**सहस्रपत्रकः** : (हस्तमुद्यम्य तरङ्गयित्वा च ।) टा ऽऽ टा ऽऽ ।

**पिप्पलादः** : तात, किंसङ्ख्येन नगरयानेन[1] यास्यते ?

**सहस्रपत्रकः** : सप्तविंशतिसङ्ख्येन ।

**कुज्झटिका** : तात, टा ऽऽ टा ऽऽ ।

**सहस्रपत्रकः** : टा ऽऽ टा ऽऽ ।

**कुज्झटिका** : कार्यनिलयात्परावर्त्तनकाले मदर्थङ्कानि-कानि खाद्यवस्तून्यानेष्यन्ते ?

**सहस्रपत्रकः** : (सस्मितम् ।) नहि किञ्चिदपि ।

**कुज्झटिका** : ( बालसुलभं सुस्निग्धं कृतककोपं रूपयित्वा । ) अम्-अम्, आनेयानि कान्यपि । नो चेद् भृशं कुप्यामि । सर्वेषाम्पितरः परावृत्तौ स्वबालकेभ्यः पुष्कलानि खादनकान्यानयन्ति । भवानेव कस्मान्नाऽऽनयेत् ? अप्यानेष्यति भवान् ?

**सहस्रपत्रकः** : यतिष्ये । परं नाहम्प्रतिश्रोतुं शक्नोमि । यतो हि परावर्त्तनकाले तादृशः सम्भ्रमो भवति, येन सर्वमप्यन्यदवश्यकरणीयं विस्मर्यते ।

---

१. नगरसीम्न्येव लोकानां नयनाऽऽनयनकर्मण्युपकारकं यानं 'नगरयानमि'ति निगद्यते । 'Bus' इत्यर्थः ।

( अपटीक्षेपेण प्रविश्य । )

**हिलमोचिका :** ईदृशान्यपि वस्तूनि विस्मर्यन्त इति तु महच्चित्रम् !

**सहस्रपत्रक: :** ( स्वभार्यां हिलमोचिकामुद्दिश्य । ) तर्हि त्वयैव कस्मान्नाऽऽनीयन्ते ? तव तावदत्रैव गृहेऽवस्थानं भवति ।

**हिलमोचिका :** बहूनि कार्यान्तराणि । नाऽस्ति समय: कुत्राऽपि गमनस्य । परावर्त्तनसमये भवत: किं भवति कार्यान्तरम् ? तस्माद्भवतैव स्वकार्यनिलयपार्श्वस्थादापणाद्वाऽत्रत्यादापणाद्वा कानिचित्फलानि वा शर्करानिर्यासगोलकानि वाऽन्यानि वा कानिचित्कटाहितानि[1] लवणखाद्यकानि[2] समानेतव्यानि । बालका भृशमुत्कण्ठितास्तिष्ठन्ति । अवश्यं रक्षणीयमेतेषां हृदयम् ।

**सहस्रपत्रक: :** (कपालग्रन्थि रूपयित्वा ।) सर्वमेतन्मामेवोपदिशसि । कार्यनिलयवेलावसानानन्तरं कथं मन: स्वावासं प्रति द्रुतं धावतीति नैव पारयिष्यते भवत्या लेशेनाऽप्यवगन्तुमत्रैव स्थितवत्या । परस्ताच्च कार्यनिलयाद्बहिर्नगरयानप्रस्थानके[3] कीदृशी द्राघीयसी जनपङ्क्ति[4]र्यानागमनं प्रतिपालयन्ती तिष्ठतीति कदाऽप्यानीतं चेतसि ? द्रागेव तत्राऽपि पङ्क्तावुपस्थातव्यं भवति । पङ्क्तौ

---

१. कटाहे निष्पचतीति कटाहते; तत्क्रियासम्पादितानि कटाहितानि तलितानीति यावत् ।

२. मिष्टान्नापणेषूपलभ्यमानानि त्रिकोणकानि ( शृङ्गाटकापरपर्यायाणि 'समोसा' इति ख्यातानि ), बेसनभर्जिका: ( बेसनवटिका: 'पकौड़ियाँ' इति ख्याता:), वीरसेनकवटिका ('आलू की टिकिया' इति ख्याता:), मण्ठा: ('मठरी' इति ख्याता:) इत्यादीनि ।

३. आगत्य तिष्ठन्ति स्थित्वा च पुन: प्रतिष्ठन्ते यस्मात्स्थानान्नगरयानानि तत्स्थानम्प्रस्थानक: । 'Bus-stop' इत्यभिप्राय: ।

४. जनपंक्तिर्लोकानां कीटवेणी । 'Queue' इत्यांग्लभाषायाम् ।

स्थितानां विंशतिर्वा त्रिंशद्वा निमेषास्तावदेवमेव विनाशिता भवन्ति । महत्याः खलु प्रतीक्षाया अनन्तरं नगरयानं यथा कथञ्चिदुपलभ्यते । तदेवमेकदाऽऽरूढवतामत्रैवाऽस्माकमायानं भवति । नहि कुत्रार्ऽपि मध्येमार्गं वयमवतरामः । अत्र चाऽवतरणानन्तरं सरलं गृहं प्रत्येव धावति नो मनः। तत्रेदृशि व्यापारे त्वमेव ब्रूहीदृग्वस्तुजातक्रयणाय कुत्र सम्भाव्यत अवकाशः क्षणस्याऽपि ।

**हिलमोचिका :** (**ईषदप्रसादं व्यक्तीकृत्य ।**) वरं-वरम् । प्रत्यहं प्रतिवेलमिदमेव श्रीमतः प्रतिवचनम् । अन्ये जनाः कथमानयन्ति ? तेषां कुत उपजायते वेला ? एतादृशं व्यपदेशजातं पुरस्कृत्य न मां शक्नोति व्यंसयितुं श्रीमान् ! सर्वमवगच्छामि श्रीमतो मनसि गतम् ।

**सहस्रपत्रकः :** (**अनीप्सां रूपयित्वा ।**) सर्वमेवाऽवगम्यते नाम तर्हि कस्मादयमनीप्सितो वचनोपन्यासः ? अयमत्रैव तिष्ठतु । (**कुज्झटिकामुद्दिश्य ।**) बाले, अत्रागच्छ । गृहाणैतदाणकत्रयम् । स्वपरिधानसेवके[1] निक्षिप्य धारयैतत् । ( **इति तस्या आणकत्रयं ददाति ।**) यदाऽपि खाद्यस्य जिघृक्षा स्यात्स्वयमेवापणं यात्वा किञ्चित्स्वस्यार्थे किञ्चिच्च पिप्पलादस्यार्थे खाद्यकमाहर्त्तव्यम् । श्रुतम् ?

**हिलमोचिका :** (**हसन्ती ।**) अथ खाद्यस्य ममाऽप्यभिलाषो जायेत तर्हि मया किं प्रतिपत्तव्यम् ? मह्यमपि केचिदाणका दातव्याः ।

**सहस्रपत्रकः :** (**विहस्य ।**) आः, भवती तु कुटुम्बस्यैतस्य कृत्स्नस्याऽपि

---

१. परिधानसेवकः='जेब' इति भाषायाम् । 'Pocket' इत्यांग्लभाषायाम् ।

स्वामिनी । के वा वयं भवत्यै दातुं सहाः ! भवत्या दत्तेनैव तावज्जीवामो वयम् । न हि याचकः क्वाऽपि याच्यमानो दृष्टः परमेश्वरैः ।

**हिलमोचिका** : आस्तामियमत्रैव याचकपरमेश्वरयोः कथा । को याचकः ?—कः परमेश्वरः ? असमीहितः[1] खल्वेष कृत्स्नोऽपि भवदीयो व्याहारः ।[2]

**सहस्रपत्रकः** : एष किमसमीहितः कृत्स्नोऽपि मदीयो व्याहारः ?

**हिलमोचिका** : अथ किम् ?

**सहस्रपत्रकः** : (**विहस्य ।**) नैवेयं तीक्ष्णा कटुवीरा[3] नाम, या हि नासिकापुटं ते तोत्स्यति ।[4] इमानि तावत्त्वन्मनःप्रसादकानि वाक्यानि मया व्याहृतानि ।

**हिलमोचिका** : मन्मनःप्रसादकानि वाक्यानि व्याहृतानि, तर्हि कस्मान्मत्पुरतः श्रीमतो ह्यात्मन्येष याचकत्वाऽऽरोपः ? का खलु भार्या भर्त्तुरेवंविधत्वं स्वप्नेऽपि सोढुं शक्नुयात् ?

**सहस्रपत्रकः** : (**स्मितं रूपयित्वा ।**) लोकविलक्षणः खल्वयमेतादृशो गृहिणीनां भर्त्तृषु पक्षपातः ! अस्तु । गम्यते तावदिदानीं पुनर्दर्शनाय ।

**हिलमोचिका** : गम्यतां पुनर्दर्शनाय । (**क्षणं विरम्य ।**) कार्यनिलयवेलाऽवसाने द्रागेव प्रत्यागन्तव्यम् ।

**सहस्रपत्रकः** : अवश्यमवश्यम् ।

---

१. अनीप्सितः ।

२. भाषितम् ।

३. 'तीखी लाल मिर्च' इति भाषायाम् ।

४. व्यथयिष्यति । 'झोंबेल' इति मराठीभाषायाम् ।

**पिप्पलादः** : (पुनरपि हस्तमुद्यम्य ।) टाऽऽऽ टाऽऽ ।
**कुज्झटिका** : (हस्तमुद्यम्य ।) टाऽऽ टाऽऽ ।
**सहस्रपत्रकः** : (हस्तमुद्यम्य तरङ्गयित्वा च ।) टाऽऽ टाऽऽ ! टाऽऽ टाऽऽऽ! ! !
**हिलमोचिका** : (हस्तमुद्यम्य सस्मितम् ।) टाऽऽ टाऽऽ ।
**सहस्रपत्रकः** : (सस्मितम् ।) टाऽऽ टाऽऽ ।

(इति निष्क्रान्ताः सर्वे ।)

इति तृतीयः संवादः ।

(ततः प्रविशत्यास्थानकासनस्थो[1] विक्रमार्कः ।)

**विक्रमार्कः** : (स्तम्भफलके[2] स्थापितामङ्गुष्ठघण्टिकां[3] टणत्कृत्य[4] ।)

क: कोऽत्र भोः ?

(प्रविश्य ।)

**पट्टप्रैष्यः**[5] : क आदेशः ?

**विक्रमार्कः** : शृणु ! अस्यां धातुमञ्जूषायाम्[6] आस्थानकनियुक्तकानामुपस्थितिपुस्तिकां[7] नैव पश्यामि । सा कुत्र गतेत्यन्विष्यताम् ।

**पट्टप्रैष्यः** : सा तु केनापि हस्ताक्षरणार्थं[8] नीतेव प्रतिभाति ।

---

१. यद्यप्यास्थानशब्दो राजसभामण्डपार्थे प्रयुक्तः संस्कृतवाङ्मये, तथाप्यर्थविस्तारेण वा अर्थसंकोचेन वा एष शब्दोऽस्मिन्प्रकरणे कार्यनिलय (Office) इत्येतस्मिन्नर्थे स्वीकृतोऽस्तीति बोद्धव्यम् ।

२. स्तम्भैः सहितः फलकः स्तम्भेषु वा संयोजितः फलक इति व्युत्पत्तिः । Table इत्यांग्लभाषायाम् ।

३. अंगुष्ठेन करणेन प्रवर्त्यमाना घण्टिकेत्यंगुष्ठघण्टिका । आकारणघण्टिका । Call-bell इत्यर्थः ।

४. टणत्करणम् टणदितिशब्दोत्पादनम् ।

५. पट्टेन सहितः प्रैष्य इति पट्टप्रैष्यः । 'चपरासी' इति भाषायाम् । Peon इत्यांग्लभाषायाम् ।

६. धातुनिर्मिता मञ्जूषा धातुमञ्जूषा । Tray इत्यांग्लभाषायाम् ।

७. उपस्थितिपुस्तिका = Attendance-Register इत्यांग्लभाषायाम् ।

८. हस्ताक्षरणार्थम् = For Signatures इत्यांग्लभाषायाम् ।

**विक्रमार्कः** : (**सन्तप्य ।**) एतावत्तु मयाप्यनुमातुं शक्यते । केन नीता, क्व नीता, कथं नीता, कदा नीता चेति बोधार्थमेव त्वमत्राहूतोऽसि । प्रैष्येण सता वाचं नियम्य प्रतिवक्तव्यम् । श्रुतम् ? गच्छ । अन्विष्य च सत्वरं प्रत्यागच्छ ।

**पट्टप्रैष्यः** : कुत्रान्विष्य प्रत्यागच्छेयम् ?

**विक्रमार्कः** : (**सरोषम् ।**) किमहमेव प्रष्टव्योऽस्मि कुत्रान्वेष्टव्यमिति ? गच्छ । कुत्राप्यन्विष । परं निमेषपञ्चकेन[1] साऽत्रोपनीता भवतु । विलम्बो न क्षमिष्यते ।

**पट्टप्रैष्यः** : विलम्बः किं मया कृतो भवति ? वस्तु यदोपलप्स्यते तदैव तावत्तस्योपादानं संभविष्यति । एकेनैव निमेषेण चेत्तदुपलम्भस्तर्हि न मया निमेषपञ्चकं तदर्थं नाशयिष्यते । परं यदि निमेषपञ्चाशत्केनाऽपि तस्य नोपलाभस्तर्हि किं स्वमस्तकं विस्फूर्ज्य[2] निमेषपञ्चकेन तदानयेयम् ?

**विक्रमार्कः** : (**अन्यमनस्कः सन् ।**) बहुतरं वाक्चालनं करोषि[3] । गच्छ-गच्छ । आदौ पुस्तिकामन्विष परस्ताच्च प्रतिवचनं कुरु । गच्छ ।

**पट्टप्रैष्यः** : यथा भवानाज्ञापयति । (**निर्गतः ।**)

(**ततः प्रविशति कुन्दाभदन्तः ।**)

**कुन्दाभदन्तः** : नमस्कृतयः ।

**विक्रमार्कः** : नमस्कृतयः । (**मणिबन्धवेलायन्त्रकं विलोक्य ।**) किमिदं

---

१. निमेषशब्दस्यात्र minute इत्यर्थोऽभिप्रेतः । निमेषाणां पञ्चकमिति निमेषपञ्चकम् । तेन निमेषपञ्चकेन । पञ्चभिर्निमेषैरित्यर्थः ।

२. मस्तकं विस्फूर्ज्य = 'माथा फोड़कर' इत्याशयः । ('टुओस्फूर्जा वज्रनिर्घोषे' इति पाणिनीयो धातुपाठः ।)

३. 'बहुत चपर-चपर करते हो' इति वाक्याशयः ।

सप्तत्रिंशम्

वेलामतिक्रम्याऽऽगमनम् ? आस्थानकस्यानुशासनमनेनोल्लंघितं भवतीति किं नैव भवन्मस्तिष्कपथमुपयाति, यत्प्रत्यहं विलम्ब्यते ?

**कुन्दाभदन्तः** : किं क्रियताम् ! कारणान्येव तद्विधानि प्रतिपद्यन्ते।

**विक्रमार्कः** : कान्यपि कारणानि स्युरास्थानकोपस्थानवेला तु नैवाऽतिक्रमणीया । अद्य सोढं मया भवद्विलम्बितागमनम्। भविष्यति काले नाऽहं कारणं—स्फारणं वा किमपि श्रोष्यामि । दशवादनमुल्लंघ्यैकोऽपि निमेषो विलम्बितो नैव सहिष्यत इति निपुणमवधीयताम् ।

**कुन्दाभदन्तः** : अवहितोऽस्मि । परं किं प्रत्यहमहमेव विलम्बेन समायामि ? अन्येऽपि तथैव समाचरन्ति। ते कस्मान्न वचनीयाः[1] स्युः?

**विक्रमार्कः** : इयं मदीया विचारभूमिः । के वा वचनीयाः के वा अवचनीया इति निर्णयो मदधिकृतः । अहं सर्वथा जागर्म्यात्माधिकारम्प्रति ।[2] नाऽत्र वस्तुनि भवद्भिरुपदेष्टव्योऽहम्। अभियुज्यतां स्वनियोगः ।[3]

**कुन्दाभदन्तः** : भवदधिकारचर्चां नाहं स्पृहयामि कर्त्तुम् । प्रत्यहमहमेव केवलं वचनीयो भवामीति खेदास्पदं प्रतिभाति । नातः परं किमपि विवक्षितं मे ।

**विक्रमार्कः** : मयि पक्षपातदोषमारोपयन्ति भवन्तः । कस्य विलम्बित-

---

१. वचनीयः=अधिक्षेपविषयः।

२. अधिकारः पदप्रविभक्तं कर्त्तव्यजातम् । 'जागर्म्यात्माधिकारम्प्रति' इति वाक्यस्य 'अहं मदीयं कर्त्तव्यजातं कृत्स्नमपि बुध्ये । नैतस्मिन् वस्तुनि मया शयानेन स्थीयते' इति तात्पर्यम् ।

३. क्रियतां स्वकार्यम् इत्यर्थः ।

मागमनं मया मर्षितमिति निवेद्यताम् ।

**कुन्दाभदन्तः** : कस्येति किम् । कालिदासस्यैवोदाहरणमत्र प्रस्तूयते ।

**विक्रमार्कः** : (विहस्य ।) हन्त, अवचनीयः[1] कालिदासः ।

**कुन्दाभदन्तः** : कस्मात् ?

**विक्रमार्कः** : विलम्ब्यागतोऽपि स एको मद्वचनान्मृष्यताम् । आस्थान-निकेतने तस्योपस्थानमनुपस्थानं वा न विचारणीयम् ।

**कुन्दाभदन्तः** : इदमेव चेच्छ्रीमतां प्रतिवचनं, तर्हि निःशब्दं स्थीयते ।

**(ततः प्रविशति वक्रकुन्तलः ।)**

**वक्रकुन्तलः** : नमस्कृतयः ।

**विक्रमार्कः** : नमस्कृतयः । कृपया, वेलामनुल्लङ्घ्य समागन्तव्यम् ।

**वक्रकुन्तलः** : वेलायामेवाजिगमिषामि श्रीमन् । परं किं विधीयताम् । यावदेवाऽहं प्रयते समये समागन्तुं, तावानेव प्रमादः संजायते । भृशं लज्जितोऽस्मि ।

**विक्रमार्कः** : यथा प्रयतितव्यं न तथा प्रयत्यते । तस्मादेव प्रत्यहं प्रमादः संघटते । अस्तु । उपविश्यताम् । अभियुज्यतां स्वनियोगः ।

**वक्रकुन्तलकुन्दाभदन्तौ** : उपस्थितिपुस्तिकां नात्र भवद्धातुमञ्जूषायां पश्यावः ।

**विक्रमार्कः** : पट्टप्रैष्यः प्रेषितोऽस्ति तन्मार्गणायै ।

**कुन्दाभदन्तः** : अस्मात्स्थानात्सा केन कुत्र वा नीता भवेत् ?

**वक्रकुन्तलः** : अस्मिन् शाखाकक्षे[2] तावद्वयं त्रय एव कार्यकर्त्तारः स्मः ।

१. अधिक्षेपस्याऽविषय इत्यर्थः ।

२. शाखा=Section of an office इत्यांग्लभाषायाम् । शाखायाः कक्ष इति शाखाकक्षः । The room where the staff of a particular section sits इत्यांग्लभाषायाम् । अत्र हि शाखाकक्षशब्दः लक्षणया शाखार्थे एव प्रयुक्त इति बोद्धव्यम् ।

एकोनचत्वारिंशम्

चतुर्थः कक्षसहायः[1]। पञ्चमः पट्टप्रैष्यः। षष्ठश्च भवान्। एतेषु तावन्नहि कोऽपि तां पुस्तिकामितोऽपनेतुं क्षमते। भवानत्रैव वर्त्तते। आवामप्यत्रैव। प्रैष्योऽन्वेषणाय गतः। अथ कक्षसहायः क्व? अप्यागतोऽस्त्यसौ?

**विक्रमार्कः** : यथा भवन्तस्तथैवाऽसौ कक्षसहायः। भवन्तो विलम्बन्ते। असौ कस्मान्न विलम्बेत?

(**ततः प्रविशति कालिदासद्वितीयः कक्षसहायश्चूर्णपिष्टकः।**)

**कालिदासः** : नमः सर्वेभ्यः।

**सर्वे** : नमस्ते कालिदास, नमस्ते।

**विक्रमार्कः** : (**कक्षसहायमुद्दिश्य।**) चूर्णपिष्टक, इत इतः।

**चूर्णपिष्टकः** : (**उपसृत्य।**) क आदेशः?

**विक्रमार्कः** : (**कोमलया वाचा।**) त्वमस्य शाखाकक्षस्य पृष्ठवंशस्थाने[2] वर्तसे। त्वमपि विलम्बेन समागच्छसि चेच्छाखाकक्ष एव कृत्स्नोऽपि विधिच्युत[3] इति चेतसा करणीयम्।

**चूर्णपिष्टकः** : अद्य मम कुटुम्बिनी रुग्णाऽऽसीत्। तां परिचरतो मे आगमनविलम्बः संवृत्तः।

**विक्रमार्कः** : अद्य कारणमिदमुपस्थितम्। ह्यः किमासीद् विलम्ब-कारणम्? ह्योऽपि सा तादृश्येवासीत्किम्?

---

१ कक्षे कक्षस्य वा सहायः इति व्युत्पत्तिः। 'दफ्तरी' इत्यभिप्रेतोऽर्थः।

२. पृष्ठवंशः = शरीरस्य पृष्ठभागे विद्यमानो मेरुदण्ड इत्याख्यो वंशाकृतिरस्थिविशेषः। मुख्य आधार इत्यत्राशयः। यत्स्थानं पृष्ठवंशस्य शरीरे, तदेव स्थानं त्वदीयमस्मिन् शाखाकक्षे इति वाक्यस्य तात्पर्यम्।

३. 'स चेत्स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः' इति कालिदासीया श्लोकपंक्तिरत्रानुसन्धातव्या।

चूर्णपिष्टकः : नहि। ह्यो मदीया भगिनी श्वशुरालयान्मम गेहमागतस्माद्विलम्बः संजातः।

विक्रमार्कः : परं विलम्बितं तु त्वया परह्योऽपि।

चूर्णपिष्टकः : तदानीं मम ज्येष्ठः कुमारको गृहस्य शीर्षपटलपृष्ठात्पतितः[1]।

सर्वे : (सोद्वेगम्) हन्त भोः, किंचिद्विप्रतीपं तु नैव संजातं तस्य ?

चूर्णपिष्टकः : श्रीमतामनुभावोदयात्सर्वथा कुशलं तस्य। अतीव कुसृतिपरायणः[2] सर्वदाऽनवहितं चेष्टते।

कालिदासः : अद्य कुटुम्बिन्यास्ते कीदृशी शरीरस्थितिः ? अपि नाम ज्वराक्रान्ता सा ? कस्योपचारः समाश्रितः ?[3] किं-किं परिचरितं त्वया ?

चूर्णपिष्टकः : (अधोमुखः सन्।) किं निवेदयेयम्। नासौ ज्वराक्रान्ता। सा हि—(इत्यर्धोक्ते।)

विक्रमार्कः : (ससम्भ्रमम्।) किं तस्याः ?

चूर्णपिष्टकः : आसन्नप्रसवा[4] तिष्ठति।

विक्रमार्कः : आसन्नप्रसवा ? कतमो मासः ?

चूर्णपिष्टकः : दशमः।

कालिदासः : तर्हि कुटुम्बिनीं परित्यज्य किमत्र त्वयाऽस्मिन्नास्थान-

---

१. शीर्षपटलपृष्ठात्पतितः='सबसे ऊपर की छत पर से गिर पड़ा' इति भाषायामर्थः।

२. 'बहुत ही शरारती है' इति वाक्याशयः। कुसृतिः='शरारत' इति भाषायाम्। 'खोडो' इति मराठीभाषायाम्।

३. 'किसका इलाज चल रहा है ?' इत्यर्थः।

४. 'उसका शीघ्र ही प्रसव होने वाला है' इत्यभिप्रायः।

निकेतने विधीयते? गच्छ। सर्वात्मना परिचर कुटुम्बिनीम्। तवोपस्थितिस्तत्रैव प्रार्थ्यते। अत्र किं वर्त्तते? कृत्स्नमप्यास्थानककार्यजातं द्रष्टुं वयं पर्याप्ताः। गच्छ-गच्छ। उपतिष्ठस्व कुटुम्बिनीम्।

**विक्रमार्कः** : दशमो मासश्चेद् गन्तव्यम्।

**चूर्णपिष्टकः** : भगिनी मे तत्र तिष्ठति। ज्येष्ठः कुमारकोऽपि तत्रैव तिष्ठति।

**वक्रकुन्तलः** : त्वमपि तत्रैव तिष्ठ। यथा त्वं तस्याः सहायो भवसि, तथा नाऽन्यः शक्नोति भवितुम्।

(अत्रान्तरे प्रतिनिवृत्य।)

**पर्णपिङ्गलः** : अये, चूर्णपिष्टक, त्वमत्र वर्त्तसे? अहं तावत्त्वामन्विष्यंस्त्वद्गृहमगच्छम्। उपस्थितिपुस्तिकायाः किं कृतवानसि?

**चूर्णपिष्टकः** : (स्वगतम्।) हा धिक्। सर्वमपि मे मषीभाण्डमेष मुण्डाकुमारकः[1] सर्वेषां पुरस्तादुत्स्फूर्जितं करिष्यति। हा धिक्। हा धिक्। किमत्र व्यतिकरे मया प्रतिपत्तव्यम्? (विमृश्य।) वरमेवं करोमि। (प्रकाशम्।) आस्थानकप्रवर्त्तनकाले मदीयं गेहं कस्मादसि गतः? किञ्चिदनार्यमाचरितुकामो ममाभावे किं मम भगिनीं गेहिनीं वा दूषयितुं गतः?[2]

---

१. गतधवासुत इत्यर्थकं कुत्सनम् (गाली)। 'मुण्डाकोडुकु' इति शब्दः तेलुगुभाषायामेतस्मिन्नेवार्थे प्रयुज्यते। सोऽत्रानुसन्धातव्यः।

२. अत्र किमप्यश्लीलं व्यज्यते। तथापि विनष्टविचारशक्तीनां मूढचेतसां मुखाद् एतादृशमश्लीलं वाक्यजातं बहुधाऽप्यनायासमेव बहिर्गतं भवतीति तेषां तद्विधबुद्धिविनाशातिशयद्योतनार्थमेव वाक्यमिदमत्र स्वीकृतमस्तीति बोद्धव्यम्।

सर्वमवैमि ते दुश्चरितं दुःसङ्कल्पितं च । तिष्ठ । इदानीमेव ते दुःसङ्कल्पितस्यैतस्य फलं प्रतिपादयामि । (इति क्रोधं नाटयं-स्तदुपर्यात्मानं निपातयति ।)

**पर्णपिङ्गलः** : (एकतोऽपसृत्य सोपहासम् ।) अहह, तव कुटुम्बिन्यपि भवति—भगिन्यपि भवति—कुमारकोऽपि भवति ! त्वद्वृत्तानभिज्ञमिममार्यं वञ्चयितुं समर्थस्त्वं न मां वञ्चयिष्यसि । (विक्रमार्कमुद्दिश्य ।) आर्य, एष—(इत्यर्धोक्ते चूर्णपिष्टकः पर्णपिङ्गलं वचनाद्विनिवर्त्तयितुं तन्मुखे तीव्रमेकं चपेटं प्रहृत्य तं भूमौ पातयितुं प्रयतते। विक्रमार्कश्च स्वासनादुत्थाय तयोर्मध्यभागे स्वात्मानं स्थापयति ।)

**विक्रमार्कः** : चूर्णपिष्टक, किमयं पर्णपिङ्गलो ब्रूते ?

**चूर्णपिष्टकः** : सर्वथा दुर्भाषितं ब्रूते । न विश्वसनीयानि वचांस्यस्याऽनार्यहतकस्य ।

**कुन्दाभदन्तः** : (सकुतूहलम् ।) पर्णपिङ्गल, भूतार्थं ब्रूहि । किमस्य कुटुम्बिन्याऽऽसन्नप्रसवाऽथ वाऽन्यदेव किंचित् ?

**कालिदासः** : (कोमलया वाचा ।) कुन्दाभ, किमित्ययं प्रैष्यस्त्वया परस्य गेहगतं विषयमनुयुज्यते ? तेषां-तेषां गेहगतं तेषां-तेषामेव गेहगतं तिष्ठतु । नायमास्थानकवेलायां विमर्शनीयो विषयः । तदुज्झ्यतां प्रश्नपरम्परेयमत्रैव ।

**विक्रमार्कः** : शोभनं प्राह कालिदासः । चूर्णपिष्टकपर्णपिङ्गलयोर्वैयक्तिकेन विषयेण नास्माकमास्थानकं सम्बन्धितं भवति । सर्वथाऽऽस्थानकसम्पृक्तेनैव वस्तुनाऽऽस्थानकनियुक्तकैरास्थानककार्यकाले सम्बन्धः स्थापनीयः । (चूर्णपिष्टकमुद्दिश्य ।) कामपि जानासि प्रवृत्तिमुपस्थितिपुस्तिकायाः ?

**पर्णपिङ्गलः** : अनेन सा चोरिता स्यात् ।

**चूर्णपिष्टकः** : (वीतचिन्तः किंचिन्मनस्तोषं नाटयन् पर्णपिङ्गलमुद्दिश्य ।) कस्मान्मया सा चोरिता ? मम तच्चोरणायां को गुणः ? कदाचित्त्वयैव सा चोरिता भवेत् । अन्यथा चोरणा शब्दस्य प्रयोगो न श्रूयेत ।

**पर्णपिङ्गलः** : त्वया पुष्कलानि वस्तूनि चोरितानीत्येष सन्देहोदयः ।

**चूर्णपिष्टकः** : (विक्रमार्कमुद्दिश्य ।) आर्य, एष मामनेकानि वस्तून्यास्थाननिकेतनाच्चोरयन्तमवलोकितवानस्ति । तदेतत्पूर्वमेव मम चौरकर्म भवत्पादमूले कस्मान्न निवेदितवानयमिति कृपया भवानेनं पृच्छतु ।

**कुन्दाभदन्तः** : आर्य, अनेन कक्षसहायेनोपस्थितिपुस्तिका चोरितेति व्याहरणं तु नैव कस्यापि बुद्धिसन्तोषं जनयति । किमेतया चोरितया कस्यापि प्रयोजनं सिध्येत ? अयं पर्णपिङ्गलः प्राक्तनं किमपि वैरं निर्यातयितुकामो मुधैव दोषमेतमस्य वराकस्य शीर्षे निपातयति । तदविश्वास्यमेतद्वचनम् ।

**विक्रमार्कः** : (वक्रकुन्तलमुद्दिश्य ।) वक्रकुन्तल, तव किमस्ति मतम् ? –उपस्थितिपुस्तिका सहसा कथं विप्रनष्टा भवेत् ?

**वक्रकुन्तलः** : आर्य, अस्मिन् व्यतिकरे एकमेव वस्तु मम बुद्धौ समायाति । न चूर्णपिष्टको नापि पर्णपिङ्गलो न चान्यः कश्चित्, केवलमयं कालिदासः स्वकाव्यलेखनव्यापारे विस्मृतात्मपरवस्तुप्रत्ययः कवितास्फूर्त्तिकाले लेख्यपत्राणामभावं पश्यन् काव्यलेखनार्थमिमामुपस्थितिपुस्तिकामेव प्रयुक्तवान् भवेत् । तस्मात्कालिदासस्यैव पत्रपोट्टलिकाऽन्वेषिता भवतु ।

**विक्रमार्कः** : (सस्मितम् ।) युज्यते । कालिदास, नूनमेष तवैव व्यापारः ।

कुत्र ते पत्रपोट्टलिका ?

**कालिदासः** : (**सातिमुग्धस्मितम् ।**) अयं वक्रकुन्तलो महता बहुमानेन संयोज्यताम् । सम्यगन्विष्टमनेनोपस्थितिपुस्तिकाप्रणाशस्थानम् । एतावन्तं कालं मयापि बहु विमर्शितं कुत्र सा तपस्विनी प्रनष्टा भवेदिति । परं न पारितं तत्स्थानप्रवृत्तिमुद्भावयितुम् । तदिदानीं स्वपत्रपोट्टलिकामुद्घाट्य पश्यामि । कच्चिदस्य वक्रकुन्तलस्य वाक्यमेव भूतार्थपरिदर्शकं भवति । (**इति स्वपत्रपोट्टलिकामुद्घाटयति । तत्रैव पत्रान्तरे निलीय निषण्णामुपस्थितिपुस्तिकां विलोक्य सर्वे सोच्चैर्हासं कलकलं कुर्वन्ति ।**)

**विक्रमार्कः** : कालिदास, अस्यां पुस्तिकायां ये श्लोकास्त्वया लिखितास्तान् श्रावय । आस्थानकस्यैष कृत्स्नोऽपि शाखाकक्षस्तच्छ्रवणेन मोदस्य परां कोटिमनुभवतु ।

**कालिदासः** : आर्यस्यायमेवादेशस्तर्हि श्राव्यन्ते । श्रूयन्ताम् ।—

**कुन्दाभदन्तः** : मन्ये रघुवंशाख्यं यत्कथापुस्तकं त्वया प्रारब्धं, तस्यैव कमपि कथाप्रसङ्गमुपजीव्य भवेयुरिमे श्लोकाः ।

**कालिदासः** : तस्यैव नाम । अजविलापाख्ये प्रकरणे केचन श्लोका ह्यो मया निर्मितास्तेष्वन्यतमा इमे । केवलं त एव श्राव्यन्ते, ये मयाऽस्यामुपस्थितिपुस्तिकायां लिखिता ; नाऽन्ये । आर्य, श्रूयन्ताम् ।—

**विक्रमार्कः** : अवहितोऽस्मि ।

**कालिदासः** : इन्दुमत्या आत्यन्तिके विप्रयोगे समुत्पन्ने परलोकगतां तामुद्दिश्याऽज एवं विलपति—

'ध्रुवमस्मि शठः—(**इत्यर्धोक्ते ।**)

**वक्रकुन्तलः** : (**सहासम् ।**) आः, भूतार्थं ब्रवीष्यात्मविषये । स्वकीय-

गुणाविष्करणात्मको मन्ये समीचीन एवैष आरम्भः ।

**कालिदासः** : (**कंचित्कालं सस्मितं स्थित्वा पुनः पठनमारभते ।**)

'ध्रुवमस्मि शठः शुचिस्मिते,—(**इत्यर्धोक्ते ।**)

**कुन्दाभदन्तः** : (**सात्युत्साहम् ।**) किं किं ब्रूषे—'शुचिस्मिते !' आः, मधुरोऽयं सम्बोधनविन्यासः । नूनं व्युत्पन्नोऽसि पदबान्धुर्य-योजनाविद्यायाम् । पुनः पठ्यताम् ।

**कालिदासः** : (**सविनयम् ।**) आदौ कृत्स्नोऽपि श्लोकः श्रूयताम् । गौरवोद्घोषः परस्ताद् भवतु ।

**विक्रमार्कः** : नूनं सर्वैर्निःशब्दैराकर्ण्यताम् । अन्यथा रसप्रसङ्गे विक्षेपः प्रसज्येत । (**कालिदासमुद्दिश्य ।**) हुम् । इदानीमारभस्व ।

**कालिदासः** :

'ध्रुवमस्मि शठः शुचिस्मिते !
विदितः कैतववत्सलस्तव ।'

(**इममेव श्लोकार्धं पुनरेकदा पठति । सर्वेऽपि श्रोतारस्तेन साकं तामुच्चारयन्ति ।**)

'परलोकमसन्निवृत्तये
यदनापृच्छ्य गतासि मामितः ॥'

**चूर्णपिष्टकः** : विक्रमार्कमुद्दिश्य परमार्य, 'असन्निवृत्तये' इत्यस्य पदस्यार्थो न सम्यग्बुद्धः । केयमसन्निवृत्तिः ? असतो निवृत्तिरसन्निवृत्तिराहोस्वित् न सन्निवृत्तिरसन्निवृत्तिरिति ?

**पर्णपिङ्गलः** : अये, कोऽत्र क्लेशः ? न सन्निवृत्तिरसन्निवृत्तिरित्येव । 'असन्निवृत्तये' इत्यस्यायमर्थः—'अपुनरावृत्तये'* इति ।

**विक्रमार्कः** : साधु पर्णपिङ्गल, साधु ! बहुश्रुतः प्रतिभासि । मम

बुद्ध्याप्यस्य पदस्यार्थग्रहणे किंचिद्विचलितमासीत्। तवायमर्थस्पष्टीकारः साधु शोभते ।

**कालिदासः** : नूनं पर्णपिङ्गलः सम्यगर्थमगृह्णात् ।

**कुन्दाभदन्तः** : (**श्रवणतादात्म्यं नाटयन्।**) 'अनापृच्छ्य गतासि मामितः'—आः, किमुच्यते । 'अनापृच्छ्य गतासि'—अनामन्त्र्य गतासि*—आः किमुच्यते ! कियत्करुणं परिदेवयस्यजम् ! साधु-साधु । बहुतरं साधु !

**कालिदासः** : अयमन्यः श्लोकः । इतोऽपि क्रमस्य परिनिष्ठानं[1] न कृतं मया । तथापि श्रूयताम् । अयमप्यस्यामुपस्थितिपुस्तिकायामेव रेखाटितः ।[2]

'सुरतश्रमसम्भृतो—(**इत्यर्धोक्ते।**)

**वक्रकुन्तलः** : (**सोपहासम्।**) साधु रे, कालिदास, शोभनः खलु तवायं 'सुरतश्रमः' । कस्मान्न स्मरसि स्मरक्रीडाश्रमं देहावसानकालेऽपि । कथमनुभूय लिख्यते ।

**कुन्दाभदन्तः** : (**सेर्षत्कोपम्।**) एवंजातीयकं विक्षेपं खलु जनयित्वा । तूष्णीं शृणु ।

**कालिदासः** : (**विक्रमार्कमुद्दिश्य।**) आर्य, सावहितं श्रूयतामेष श्लोकः ।

**विक्रमार्कः** : ओम् । शृणोमि । श्रावय ।

---

*अयमर्थो मल्लिनाथकृतः संजीवन्याख्यायां रघुवंशटीकायाम् ।

१. परिनिष्ठानम्=Finalisation. अन्तिमीकरणमिति यावत् ।

२. रेखया रेखाया वा अटनं रेखाटनम्; तद् यस्य समाचरितं तथाभूत इति व्युत्पत्तिः । लिखित इत्यर्थः ।

**कालिदासः** :

'सुरतश्रमसम्भृतो मुखे
ध्रियते स्वेदलवोद्गमोऽपि ते ।'

**विक्रमार्कः** : **(आत्मानं विनिवारयितुमक्षमः सन् ।)** आः, कालिदास, किं लिख्यते ! कीदृशी सूक्ष्मवस्तुग्राहिणी ते दृष्टिः ! आदौ तावत्'स्वेद'स्तत्रापि 'लवा'स्तत्रापि तेषा'मुद्गमः' स च 'ध्रियते' । कोऽयं सुकुमारः कल्पनाचक्षुर्विलासो नाम ! साधु । महानसि सहृदयः । अमरः खल्वयं ते 'स्वेदलवोद्गमः' । किमुच्यते—'सुरतश्रमसम्भृतो मुखे ध्रियते स्वेदलवोद्गमोऽपि ते'—पुनरेकवारं श्रावय ।

**कालिदासः** : **(पूर्वतनीं पंक्तिं पुनरपि पठित्वाऽग्रे पठति ।)**

'अथ चास्तमिता त्वमात्मना
धिगिमां देहभृतामसारताम् ।।'

**कुन्दाभदन्तः** : सुवचनोऽसि भोः । सौन्दर्यस्य परां काष्ठामनुभूयाऽपि जन आत्मनाऽस्तं गच्छति ! हन्त, धिगेष नियमो लोकस्य ।

**विक्रमार्कः** : कालिदास, श्लोकेऽस्मिन् स्वेदलवोद्गमनिबन्धनां प्रथमां पंक्तिं लिखित्वा केयं द्वितीया पंक्तिस्त्वया लिखिता ? मया तु मनस्यानीतमासीद् यत्स्वेदलवानामेव विषये किञ्चित्पुरस्ताद्वर्णनं कर्त्तासीति । कथमादिमचरणद्वयगतो विषयस्तृतीयचरणगतेन चतुर्थचरणगतेन च विषयेण सुव्यक्तं सङ्गच्छते ?

**पर्णपिङ्गलः** : **(विक्रमार्कमुद्दिश्य ।)** आर्य, अत्रायं विमर्शः ।[1] सुरतश्रमः आनन्दस्य परमावधिः । तत्सम्भृतः—तज्जनितः स्वेदलवोद्गम-

---

१. विमर्शः=तात्पर्यबोधः ।

स्तस्य च नारीमुखे धारणं सौन्दर्यस्य परमावधिः। तत्रानन्दस्य सौन्दर्यस्य च परां मात्रां धारयन्ती नार्यपि—याहि नाम जगतीतलभुवां प्राप्तव्यतमं वस्तु, सापि—म्रियते। अस्तं गच्छतीति—येनेयं मरणधर्मिताऽस्य सौन्दर्यानन्दयोरेकाधिष्ठानभूतस्य[1] स्त्रीदेहस्यापि कल्पिता, स एवात्र धिगिति शब्देन निन्दितव्यतां नीयते।

**कालिदासः** : साधु। सम्यग्विस्तारयस्यर्थम्।

**विक्रमार्कः** : (सकौतुकम्।) एतावान् निपुणोऽस्ति पर्णपिङ्गलः काव्यार्थपरिज्ञान इति तु सम्प्रत्येव परिचितं मया।

**चूर्णपिष्टकः** : आर्य, यस्मिन्नास्थानके कालिदाससदृशाः सहृदया नियुक्तास्तिष्ठन्ति, तत्रेदं सर्वमपि सम्भाव्यते।

**कुन्दाभदन्तः** : भूतार्थं ब्रूते चूर्णपिष्टकः। अत्र कालिदास एव प्रशस्यः। तस्यैवायमनुभावो यदत्रस्थाश्चूर्णपिष्टकपर्णपिङ्गलसदृशा अगृहीताऽत्यर्थाक्षरा[2] अपि काव्यस्य सुनिगूढं हृदयं परीक्षितुं शक्नुवन्ति।

**वक्रकुन्तलः** : आर्य, कालिदाससदृशा एव जना धन्याः, येषां साहचर्येणानक्षरा अपि साक्षराननतिशेरते। आर्यस्याग्रजेन श्रीमता भर्तृहरिणा निर्मितः श्लोक एकोऽस्मिन् प्रस्तावे मम स्मृतिपथमुपयाति।—

'किन्तेन हेमगिरिणा रजताद्रिणा वा,
यत्र स्थितास्तु तरवस्तरवस्त एव।

---

१. अधिष्ठानम्=प्रधानं स्थानम्। मुख्य आश्रयः।

२. प्रभूतमनधीता इत्यर्थः।

मन्यामहे मलयमेव, यदाश्रयेण
कङ्कोलनिम्बकुटजा अपि चन्दनाः स्युः ॥

**विक्रमार्कः** : सर्वथा प्रशस्यः कालिदासः । (**किमपि विमृश्य** ।) अस्तु । उपलब्धा नाम सा विप्रलीना तपस्विन्युपस्थितिपुस्तिका । तदागन्तव्यं सर्वैरस्यां हस्ताक्षराणि च निवेश्य स्वस्वकार्यनियोगोऽभियुज्यताम् । अस्थानककाल आस्थानकसम्पृक्तेनैव वस्तुना आस्थानकनियुक्तकैः सम्बन्धः स्थापनीयः । (**सर्वे सोच्चैर्हासं कलकलं कुर्वन्ति सस्मितं च स्वस्वासनाभिमुखं निर्गच्छन्ति** ।)

(**इति निष्क्रान्ताः सर्वे** ।)

इति चतुर्थः संवादः ।

## प्रथमं दृश्यम् ।

(ततः प्रविशति निष्कूलकः शुष्ककूलकश्च ।)

**निष्कूलकः** : (वर्त्मपार्श्वस्थं शुष्ककूलकं करेण स्कन्धदेशे घट्टयित्वा ।[1]) किम्भोः, किमत्र विधीयते ?

**शुष्ककूलकः** : (मुखं परिवर्त्य ।) भवन्तमेव प्रतिपालयँस्तिष्ठामि । का वेला त्वयाऽद्य विनाशिता ?

**निष्कूलकः** : किं वृत्तम् ? किमपि विशिष्टं वा ?

**शुष्ककूलकः** : न नाम विशिष्टं किंचित् । ( सुहृज्जनसहजं कृत्रिमं कोपं नाटयित्वा ।) हतक, इदानीं किन्तवैकवादनम् ? अपि दृष्टं वेला-यन्त्रम् ?

**निष्कूलकः** : (सापराधमिव ।) विलम्बितं नाम लेशेन । कार्यमेव गुरुतरमासीदद्य तादृशम् ।

**शुष्ककूलकः** : किन्तत् ?

**निष्कूलकः** : किमपि ।

**शुष्ककूलकः** : किमपीति किम् ? व्यक्तं ब्रूहि ।

**निष्कूलकः** : तत्सर्वं पश्चाद्वक्ष्यते । आदौ तावन्मध्याह्लाशस्य[2] चिन्ता कुरु । अपि भुक्तं भवता किञ्चित् ?

---

१. घट्टयित्वा='थपथपाकर' इति भाषायाम् ।

२. मध्याह्लाशः=मध्याह्नकालिकः स्वल्पाहारः । Lunch इत्यांग्ल-भाषायाम् ।

**शुष्ककूलकः** : अविद्यमाने त्वयि कुतो मे भक्ष्येषु समादरः ? इदानीमागतोऽसि । तत्त्वमेव निवेदय किमद्य भोक्तव्यं भवतीति ।

**निष्कूलकः** : राजकीयकार्यनिलयस्याऽस्य विप्रकृष्टे कोणान्तरे स्थापिता फलानां विपणिरियम् । तद् ब्रूहि, कानि फलानि क्रेतव्यानि ?

**शुष्ककूलकः** : अहं सलवणं जम्बूफलमस्या[1] वृद्धायाः क्रीणामि ।

**निष्कूलकः** : अहं वज्रबीजफलं [2] क्रेष्यामि ।

**(इत्युभावपि निर्गतौ ।)**

**(पुनरपि प्रविश्य ।)**

**निष्कूलकः** : कानि वस्तूनि गृहीतानि ?

**शुष्ककूलकः** : अस्मिन् पलाशपत्रद्रोणके सलवणं जम्बूफलम्, अपरिणतं[3] -पाटितोदरपूरितलवणनिम्बूकरसं चाणक्यमूलकम्, एतस्मिँश्च सोपस्करास्त्रपुसखण्डकाः[4] समानीताः । अथ त्वया किं क्रीतम् ?

**निष्कूलकः** : वज्रबीजफलम्, दाडिमानि, मधुरनारङ्गकं[5] , द्राक्षाफलानि च ।

**शुष्ककूलकः** : न पुनः कदलीफलम् ?

**निष्कूलकः** : हन्त, विस्मृतमेव तत् । इदानीं क्रेष्यामि । धारयेमान् द्रोणान् ।

---

१. जम्बूफलम्='जामुन' इति भाषायाम् ।
२. वज्रबीजफलम्='अमरूद' इति भाषायाम् । 'पेरू' इति
३. अपरिणतम्=अकठिनीभूतम् ।
४. त्रपुसम्=उर्वारुकम् । 'खीरा' इति भाषायाम् ।
५. मधुरनारङ्गकम्=त्वक्सुगन्धफलम् । 'संत

**शुष्ककूलकः** : तिष्ठ तावत् । कदलीफलं मया क्रेष्यते । त्वमेव मम द्रोणौ धारय ।

**निष्कूलकः** : (**किमपि विचिन्त्य ।**) एवं क्रियताम् । अद्य कदलीक्रयस्तथैव तिष्ठतु । अद्य ममोदरे किंचिद्विप्रकृतमिवानुभूयते ।[1] दुष्पचं खलु कदलीफलम् । तदीदृशस्योदरस्य नैव हितायेति मन्ये ।

**शुष्ककूलकः** : नहि । नहि । एवमाकर्ण्यते किल यत्कदलीफलभक्षणानन्तरमेला[2] भक्ष्येत चेद् दुष्पचमपि तद् द्रागेव जीर्णं भवतीति । तदद्य मम परिधानसेवके प्रत्यग्रक्रीता एला बह्व्यस्तिष्ठन्ति । तस्मान्मैवं भेतव्यम् ।

**निष्कूलकः** : परं कस्मादद्य ते सुमहानाग्रहः कदलीफलक्रये ? न शक्नोषि किं तेन विना स्वात्मानं पर्यवस्थापयितुम् ?[3]

**शुष्ककूलकः** : न खलु शक्नोमि । कदलीप्रधानः[4] शुष्ककूलक इति ध्रुवमवैहि ।

**निष्कूलकः** : (**विहस्य ।**) तर्हि कस्मात्त्वं 'शुष्ककूलकः' कस्मान्न 'कदलीमूलक' इति ?

**शुष्ककूलकः** : आः, सुप्रियं भणितं 'कदलीमूलकः शुष्ककूलकः' इति । मुहूर्त्तं प्रतिपालय । एष कदलीं क्रीत्वा समागच्छामि । (**निर्गतः ।**)

(**त्वरितमेव प्रत्यागत्य ।**)

पश्य, कीदृगिदं प्रतिभाति चित्रिकाङ्कितं[5] कदलीफलत्रयम् ।

---

'आज पेट में कुछ गड़बड़-सी महसूस हो रही है' इति वाक्यार्थः ।
१. घट्ट...
...लायची' इति भाषायाम् ।
२. मध्याह्ना...
...रा काम नहीं चल सकता क्या ?' इति वाक्याशयः ।
भाषायाम् ।
...लभक्षणप्रियः ।
...दार' अथ वा 'चितरीदार' इति भाषायाम् ।

**निष्कूलकः** : कोऽवक्रयः ?

**शुष्ककूलकः** : आणकद्वयम् ।

**निष्कूलकः** : आणकद्वयं—न पुनराणकत्रयम् ?

**शुष्ककूलकः** : नैव-नैव ।

**निष्कूलकः** : तर्हि मन्ये अतिमात्रं भद्रबुद्धय इमेऽत्रत्याः फलविक्रयिकाः। अस्मद्भागे तु त्र्याणकेभ्यो न्यूनो नास्त्यवक्रयः ।

**शुष्ककूलकः** : अस्मद्भागेऽपि तथैव । मुण्डाकुमारका अविगणय्य मध्याह्नवासरमणिं[1] लोकाँल्लुण्ठितुं प्रयतन्ते ।

**निष्कूलकः** : एषां कदर्यहतकानां समग्रमपि भाण्डागारं भस्मनि परिणतं[2] भवतु । अस्तु । अहं वर्त्मपार्श्वस्थं लोकजलप्रणालकं[3] गत्वा जलस्य धारायां प्रक्षाल्यानयामीमानि द्राक्षाफलानि । अतीव कच्चराणि[4] प्रतीयन्ते ।

**शुष्ककूलकः** : गच्छ । अहमपि सुप्रच्छायशीतले शष्पोपसंवलिते घण्टापथोपकण्ठस्थेऽशोकतरुतले[5] स्थितस्त्वां प्रतिपालयामि[6] ।

**(इत्युभावपि निर्गतौ ।)**

इति पंचमे संवादे प्रथमं दृश्यम् ।

---

१. 'दिन-दहाड़े' इति तात्पर्यमस्य वाक्यखण्डस्य ।
२. परिणतम्=रूपान्तरिम् ।
३. लोकजलप्रणालकः='Public hydrant' इत्यांग्लभाषायाम् ।
४. मलिनानि । 'मलीमसं तु मलिनं कच्चरं मलदूषितम्' इत्यमरः ।
५. घण्टापथः='Main road' इत्यांग्लभाषायाम् । उपकण्ठे=समीपे
६. त्वां प्रतिपालयामि=तव मार्गप्रतीक्षां करोमि ।

## द्वितीयं दृश्यम्

(ततः प्रविशति खण्डकूष्माण्डकः ।)

**खण्डकूष्माण्डकः** : (स्वगतम् ।) अद्य परिधानसेवके केवलं षडाणका विद्यन्ते । एषामाणकत्रयं तु सायं कार्यनिलयात्स्वावासं प्रतिनिवर्त्तमानस्य मे नगरयानप्रवेशपत्रमूल्यं भविता । अवशिष्टेषु त्रिष्वाणकेषु अद्यतनस्य मध्याह्नाशस्य प्रबन्धः कथं विधातव्यः ? क्षुधा तावदद्य भूयसी प्रतिभाति । (चिन्तां नाटयित्वा पुनरपि स्वगतम् ।) एवं क्रियताम्—अत्र कार्यनिलयप्रत्यासन्नायां विपणौ केचनापणिका भोजनमपि प्रस्तुवन्ति । तत्र गत्वा भोजनं क्रियताम् । परमेतेनाणकत्रयेण भोजनं कथं भविष्यति ? (स्मरणं नाटयित्वा पुनरपि स्वगतम् ।) एकेनाणकेनैका गोधूमरोटिका[1] समायाति । आणकत्रयेण तिस्रो गोधूमरोटिकाः । परं व्यञ्जनस्य किम् ?

---

१. गोधूमरोटिका='गेहूँ के आटे की मोटी रोटी' इति भाषायाम् । 'शुष्कगोधूमचूर्णेन किंचित्पुष्टां च पोलिकाम्* । तप्तके स्वेदयेत्क्त्वा भूर्यङ्गारेऽपि तां पचेत् । सिद्धैषा रोटिका प्रोक्ता' इति भावमिश्रः । [*पोलिका= मैदे का महीन का' इति भाषायाम् । । 'कुर्यात्समितयाऽतीव तन्वी पर्पटिका ततः । स्वेदयेत्तप्तके न पोलिकां जगदुर्बुधाः' इत्यपि भावमिश्रः । अत्र 'समिता' शब्दस्य 'मैदा' ाषागतोऽर्थः ।]

प्रत्येकं विशिष्टशाकप्राधारिकायाः[1] केचनाणकत्रयं केचन चाणकचतुष्टयमपि गृह्णन्ति। तत्किं व्यञ्जनेन विनैव रोटिका भक्षणीयाः? (विचिन्त्य पुनरपि स्वगतम्।) हुम्; इत्थमाकर्ण्यते यद्रोटिकया सार्धमापणिकाश्चणकमाषयोर्मिश्रितं सूपं[2], काँश्चित्पलाण्डुखण्डान्[3] काञ्चिच्च तिन्तिडीलेह्यां[4] प्रयच्छन्तीति। एतावता बुभुक्षायाः सर्वांशेन निवारणं नैवापि सम्भाव्येत—किंचित्तु तद्भविष्यत्येव। तत्तत्रैव गच्छेयम्। (कतिचित्पदानि गत्वा पुनः स्वगतम्।) आणकत्रयमिदं चेन्मयैवं सूपरोटिकयोर्व्ययितं, तर्हि मत्पार्श्वे कुब्जा वराटिकाऽपि नैवाऽवशिष्टा स्थास्यति[5]। अद्य खलु मया कानिचित्पत्राण्यप्यवश्यं प्रेषणीयानि सन्ति। समापिते सर्वस्मिन्नपि द्रव्ये भोजनकर्मण्येव—पत्रप्रेषणं कथं भविष्यति? तस्मात्सर्वथा रक्षणीयमाणकत्रयमिदं स्वपरिधानसेवक एव। नैतदेवं व्ययीकरणीयम्। (पुरतो विलोक्य।) इमौ

---

१. प्राधारिकापरिमितस्य सविशेषं साधितस्य (Specially prepared) शाकस्येत्यभिप्रायः। [प्राधारिका = Plate.]

२. चणकमाषयोर्मिश्रितः सूपः='चने और उड़द की मिलवां दाल' इति भाषायाम्। 'दलितन्तु शमीधान्यं दालिर्दाली स्त्रियामुभे। दाली तु सलिले सिद्धा लवणार्द्रकहिंगुभिः संयुक्ता सूपनाम्नी स्यात्।' इति सूपसाधनप्रकारो भावमिश्रोक्तः। [दालिः, दाली='दाल' इति भाषायाम्।]

३. पलाण्डुखण्डाः='प्याज के टुकड़े' इति भाषायाम्।

४. तिन्तिडी=अम्लिका। चिंचिका, चिंचा, अम्ला, तिन्तिडीका, दन्तशठा इत्याद्यपरपर्याया 'इमली' इति हिंदीभाषायां 'चिंच' इति च मराठीभाषायां ख्याता।

५. 'तो मेरे पास कानी कौड़ी भी नहीं बच रहेगी' इति वाक्याभिप्रायः।

कावित एवाभिवर्त्तते ? (निपुणं निरीक्ष्य।) अये, इमौ तावन्मम कार्यनिलयसुहृदौ[1] निष्कूलकशुष्ककूलकौ स्तः। आगच्छतां नाम। यावदिमावभिभाषे। (प्रकाशम्।) सखायौ, इत आगच्छतम्।

(ततः प्रविशतः फलपरिपूर्णद्रोणहस्तौ निष्कूलकशुष्ककूलकौ।)

**निष्कूलकशुष्ककूलकौ** : अये खण्डकूष्माण्डक, अत्र कथमेकाकी तिष्ठसि? आगच्छावयोर्द्वयोस्तृतीयो भव। अभ्यवहरोपनीतानि[2] कानिचित्फलानि।

**खण्डकूष्माण्डकः** : मध्याह्नाशवेलायां प्रत्यहमहमत्रैव समागच्छामि। सुललितशष्पभूयिष्ठे नीरकारञ्जकोपकण्ठस्थे[3] कार्यनिलयकर्मव्यापारनीरसं मनः किंचिद्विनोदयामि।

(त्रयोऽपि तत्रोपवेशनं नाटयन्ति।)

**निष्कूलकः** : (करस्थान्द्रोणानधः स्थापयित्वा फलानि सर्वेभ्यो विश्राणयन्।[4]) खण्डकूष्माण्डक, आरभस्व भक्षणम्। अद्य चिरादावयोः समीपमागतोऽसि। किं युष्माकं शाखायां सम्प्रति कार्याधिक्यं वर्त्तते।

**शुष्ककूलकः** : (स्वकरस्थानि फलानि सर्वेभ्यो विश्राणयन् खण्डकूष्माण्डक-

---

१. कार्यनिलयसुहृद्='Colleague' इत्यांग्लभाषायाम्।

२. अभ्यवहरणम्=भक्षणम्।

३. क इति जलनामसु पठितम्। तेन द्वारेण विधीयमानं यद् आरञ्जनं द्रष्टृजनचित्तसमावर्जनं, तत्करोति यः, स 'कारञ्जकः'। जलकणोत्क्षेपणखेलायन्त्रमन्दिरमित्यर्थः। 'फव्वारा' इति हिंदीभाषायां 'कारंजा' इति च मराठीभाषायाम्। अथ कारञ्जकशब्द एव नीरपर्यायेऽन्तर्भूते सति पुनरत्र 'नीरकारञ्जक' इति यः पृथङ्नीरपदप्रयोगः, स 'इदं तिलतैलमि'त्यत्र तिलपदप्रयोगवद् बोद्धव्यः।

४. विश्राणयन्=ददन् 'Distributing' इत्यांग्लभाषायाम्।

मुद्दिश्य।) भवतां शाखायां तावदनारतं द्वादशमासिकं कार्यम्। नैव किम्?

**खण्डकूष्माण्डकः :** **(फलान्यभ्यवहरन्।)** अहं तु प्रपीडितमात्मानं कलयामि। एतादृशी चिरस्थायिनी कार्यश्रृङ्खला न वेद्मि कदा शून्यतां यास्यति? कियत्करणीयं जनेन कार्यम्? आकार्यनिलयारम्भात् कार्यनिलयवेलापरिसमाप्तिपर्यन्तं किं यन्त्रवत्कार्यमेव करणीयम्? श्वासोच्छ्वासाय तु कश्चन समयो भवितव्यो न वा? अथ वा सोऽपि कार्यकलापार्थमेव वषट्करणीयः[1]!

**शुष्ककूलकः :** अतिमात्रं विषण्णः प्रतीयसे। अथ कतिपयेभ्यो दिवसेभ्यः नैमित्तिका[2] अवकाशाः कस्मान्न गृह्यन्ते?

**खण्डकूष्माण्डकः :** **(विहस्य।)** नैमित्तिकानामवकाशानां कृते शरीराऽनारोग्यस्य व्यपदेशः[3] पुरस्कर्त्तव्यो भवति। ममारोग्यमपि दुर्भाग्येन तादृशं दृढं वर्त्तते, यन्मदर्थं नैमित्तिकावकाशग्रहणोपयोगिव्यपदेशानामपि दुर्भिक्षं संजातमस्ति। मिथ्याव्यपदेशा नैव पुरस्कर्त्तव्या इति कृतप्रतिज्ञ इवाऽस्म्यहम्। अथ केचिज्जना आश्रितानामनारोग्यादिकं निमित्तं प्रस्तुत्यापि नैमित्तिकावकाशार्थमावेदयन्ते[4]। तादृशमपि निमित्तजातं सुदुर्लभम्। अथ त्वमेव पश्य। गृहे गृहिणी नास्ति। पितरौ न स्तः। अन्ये सन्निकृष्टा

---

१. 'उत्स्रष्टव्यः' इत्येतस्मिन्नर्थे वैनोदिकोऽयं प्रयोगः। [ वषट्कारः= स्वाहाकारः।]

२. नैमित्तिका अवकाशाः='Casual leave' इत्यांग्लभाषायाम्।

३. व्यपदेशः='बहाना' इति भाषायाम्। 'निमित्त' इति मराठीभाषायाम्।

४. आवेदयन्ते=Apply इत्यांग्लभाषायाम्।

विप्रकृष्टा वा सम्बन्धिनो न सन्ति । काकाक्षिकल्पः[1] स्वगृहेऽहमेव केवलः । आरोग्यमपि सुदृढम् । कार्यशक्तिरप्यकुण्ठिता । एवं चापि, गृहीतावकाशस्य मे किं चेतःसमाधानाय भवति ? तस्मान्न नैमित्तिका अवकाशा गृह्यन्ते । अथ यदा नैमित्तिका अवकाशास्तथैवाऽगृहीता निर्यान्ति, तदार्जितकानामवकाशानां[2] ग्रहणस्य कथैव का ?

**निष्कूलकः** : तर्हि किं त्वमवकाशमेव न गृह्णासि ?

**खण्डकूष्माण्डकः** : ओम् ।

**शुष्ककूलकः** : केवलं व्यपदेशाभावादेव किम् ?

**खण्डकूष्माण्डकः** : अंशतो व्यपदेशाभावादंशतश्च लिप्साभावात् ।

**निष्कूलकः** : लिप्साभावश्चेत्कीदृशः पुनरेष विषादः ?

**खण्डकूष्माण्डकः** : एष तावदात्यन्तिको विषादो यावदायुर्व्यापी ।

**शुष्ककूलकः** : एकाकित्वं बाधते किन्तर्हि त्वाम् ।

**खण्डकूष्माण्डकः** : (**विचारक्रियां नाटयञ्छनकैः ।**) एकाकित्वं बाधत इत्यपि वक्तुं नालम् ।

**शुष्ककूलकः** : तर्हि किमस्ति तद्, यत्त्वदीयस्य विषादस्य कारणं संजायते ?

**खण्डकूष्माण्डकः** : (**विहस्य ।**) अथाहमेवं प्रष्टुमिच्छामि किं भवन्तौ कदापि विषादव्यापारभूमित्वं नैव यातौ ?

---

१. काकाक्षिकल्पः=वायसनेत्रकनीनिकासंकाशः । एकलत्वातिशयद्योतनार्थमेवैष शब्दप्रयोगः । एतस्मिन्नेवार्थे 'खड्गविषाणकल्पः' इत्येतादृश शब्दप्रयोगोऽपि बौद्धग्रन्थेषु दृश्यते । [खड्गः='गेंडा' इति भाषायाम् । ]

२. अर्जितका अवकाशाः=Earned leave इत्यांग्लभाषायाम् ।

**निष्कूलकशुष्ककूलकौ** : आवां तावद् गृहमेधिनौ[1] । विषादस्त्वस्मादृशां पञ्चम्यामेव पूजितः[2] । अस्माकं तद्विषये किं पृच्छ्यते ?

**खण्डकूष्माण्डकः** : गृहमेधिनां किंरूपो विषादः ?

**शुष्ककूलकः** : विषादस्यैकं रूपं भवेत्तदा वर्णयेम । अत्र तु सहस्ररूपः सहस्रवर्त्मा सामवेद इव विषादः । तस्य किं-किं वर्ण्यताम् ? अनेकाश्चिन्ताः सर्वतो ग्रसन्त्योऽस्माकं जीवितं नाममात्रावशेषं कुर्वन्त्यस्तिष्ठन्ति । अस्माकं तु यत्सत्यं कार्यनिलयेऽपि पारतन्त्र्यं गृहेऽपि पारतन्त्र्यम् । अत्र लत्ताप्रहारस्तत्रापि लत्ताप्रहार एव ।

**निष्कूलकः** : बाढम् । उभयत्रलत्ताप्रहारात्मकमेवाऽस्मादृशामायुष्यम् । परं त्वदीय आयुष्ये केवलमेकाकित्वोद्भव एव विषादो भवेदेकरूपः । नैव किम् ?

**खण्डकूष्माण्डकः** : भवदर्थे कश्चन भवदीयः कश्चन भवतामपर इवात्मा भवत्परोक्षेऽपि निर्व्याजेन मनसा चिन्तां व्यापारयति—भवत्कुशलार्थं यत्नशीलो भवति—नैतत्किं समाश्वासनस्थानं भवताम् ? परमस्मदर्थं कस्य निर्व्याजं[3] निर्व्यलीकं च मनः ? कृत्स्नोऽपि लोकोऽकारणजिघांसुरिव वर्त्तमानो दृश्यते । एतस्य निर्व्याजस्य स्नेहस्य मूल्यमाकूतयितुं[4] भवन्तः समर्थाः किम् ? अस्मादृशामगृहमेधिनां कृते सर्वः सव्याजः स्नेहः । 'मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद्दुरात्मनामि'ति यद्वदन्ति, तदस्माभिः

---

१. गृहस्थाश्रमिणौ ।

२. 'न विषादस्याभावः क्वापि शक्यते कल्पयितुमस्माकमि'ति तात्पर्यमेतस्य वाक्यस्य ।

३. निर्व्याजम् = निष्कपटम्; निर्व्यलीकम् = विप्रियाचारिताविरहितम् ।

४. किंरूपं किम्मात्रञ्चेति निर्णयनमाकूतनम् ।

स्वजीवने प्रतिपदमनुभूयते। द्रव्यमर्जयामि। द्रव्ययोगेन जगतीगतं कृत्स्नमपि भोग्यं वस्तु वयमनुभवितुं क्षमाः। सत्यमेतत्। किमस्ति तद्, यद् द्रव्यबलेन नोपलभ्यते? सर्वं तूपलभ्यते?—गृहं, वस्त्रं, खाद्यं, योषितः, प्रवासः, यानानि—सर्वमेवोपलभ्यते। स्नेहोऽप्युपलभ्यते। नोपलभ्यत इति नाहं वच्मि। परं कीदृशो भवति स स्नेहो, यः कार्षापणैरर्ज्यते? स्नेहेन जनस्य सर्वेऽपि शारीरिका मानसिकाश्चाभावाः पूर्णतां यान्तीत्युच्यते। परमस्माभिर्य उपलभ्यते स्नेहस्तेनाऽस्माकमेकतरस्याप्यभावस्य पूर्त्तिर्नैव संजायते। वस्तून्युपलब्धानि; परं कस्यापि तृप्तिर्न—नाऽपि शरीरस्य नाऽपि च मनसः। द्रव्यं व्ययितं; परं तस्य परिवर्त्तने यत्प्राप्तं, तच्छून्यम्। भवद्भिर्गृहमेधिभिर्व्ययीकृतस्य द्रव्यस्य प्रतिफलं यदपि लभ्यते, तदन्तःसारवद्[1] भवति। पूर्णं भवति। परिपूर्णं भवति। अस्माकं जीवितं भवतां जीवितस्य षोडशीमपि कलां नैव स्प्रष्टुमर्हति।[2]

**शुष्ककूलकः** : परं बन्धो, कस्य जीवितं परिपूर्णम्? कस्य शारीरिका मानसिका वा अभावा अस्मिन्नायुषि शून्यतां गच्छन्ति? नैवं मन्तव्यं यदस्माकं जीविते यत्प्राप्यते, तत्पूर्णं युष्माकं जीविते च यत्प्राप्यते, तच्छून्यमिति।

**निष्कूलकः** : भूतार्थमाह शुष्ककूलकः। गृहमेधिनामायुषि यानि

---

१. अन्तःसारवद् = 'ठोस' इति भाषायाम्।

२. 'हमारे जीवन का आप लोगों के जीवन से भला क्या मुकाबला हो सकता है?' इति भाषागतो वाक्याशयः। शाब्दिकोऽर्थस्तु—'हमारा जीवन आपके जीवन की सोलहवीं कला को भी नहीं छू सकता' इत्येवम्प्रकारकः।

वैकल्यानि, तान्यपि तथाविधान्येव । गृहमेधित्वेऽगृहमेधित्वे च न कोऽपि तादृशो विशेषो, येनैकस्य जीवितं पूर्णमपरस्य च जीवितं शून्यमिति वक्तुं युज्येत ।

**खण्डकूष्माण्डकः** : तथापि गृहमेधिनां जीवितमगृहमेधिनां जीविता दधिकतरम्पूर्णमिति तु स्वीकर्त्तव्यमेव भवति । असञ्जात-पुष्पफलस्य बन्ध्यस्य वृक्षस्य तुलनायां सञ्जातपुष्पफलानाम-बन्ध्यानां वृक्षाणां प्राशस्त्यमधिकमेव गणितव्यम् ।

**(ततः प्रविशत्यन्यतरस्तेषां कार्यनिलयसुहृत् कुसुमकिंजल्कः ।)**

**कुसुमकिंजल्कः** : सखायः, कस्मिन्गूढे विचारकर्मणि निमग्ना यूयम् ? नैव श्रुतं यदद्याऽस्माकं कार्यनिलयशाखाकक्षाध्यक्षाणां[1] शाखा-परिवर्त्तनस्यादेशाः प्रचारिताः सन्तीति ?[2]

**सर्वेऽपि** : **(सोत्कण्ठम् ।)** कदा प्रचारिताः ?

**कुसुमकिंजल्कः** : इदानीमेव तान्दृष्ट्वा समागच्छामि ।

**सर्वे** : कस्य कक्षाध्यक्षस्य कस्यां शाखायां विनिवेशः ?[3]

**कुसुमकिंजल्कः** : संस्थापनशाखाकक्षाध्यक्षस्य[4] विनिवेशः साधारण-प्रबन्धनशाखायाम् ।[5] साधारणप्रबन्धनशाखाकक्षाध्यक्षस्य

---

१. शाखाकक्षाध्यक्षः (कक्षाध्यक्षो वा)=Section-Officer अथवा Assistant Superintendent इत्यांग्लभाषायाम् ।

२. 'Orders of transfer from one section to the other have been issued' इत्यांग्लभाषागतो वाक्यखण्डाऽर्थः ।

३. विनिवेशः=posting इत्यांग्लभाषायाम् ।

४. संस्थापनशाखा=Establishment Section.

५. साधारणप्रबन्धनशाखा=General Administration Section,

प्रश्नशाखायाम्।[1] प्रश्नशाखाकक्षाध्यक्षस्य समितिशाखायाम्।[2] समितिशाखाकक्षाध्यक्षस्य विधिकार्यशाखायाम्।[3] विधिकार्यशाखाकक्षाध्यक्षस्य मुद्रणशाखायाम्[4]। मुद्रणशाखाकक्षाध्यक्षस्य च सूचनाशाखायाम्।[5] अथ सूचनाशाखाकक्षाध्यक्षः स्वागतकार्यशाखायां[6] विनिवेशितः। स्वागतकार्यशाखाकक्षाध्यक्षः खल्विदानीं संस्थापनशाखाकक्षाध्यक्षत्वेन विनिवेशितः।

**सर्वे** : हन्त, कीदृशं परिवर्तनम्।

**कुसुमकिंजल्कः** : तच्चाप्येवमप्रत्याशितं सत्[7] !

**शुष्ककूलकः** : अस्माकं विधिकार्यशाखाकक्षाध्यक्षो मुद्रणशाखायां गतः! तत्रासौ कस्य कपालकूष्माण्डम्भेत्स्यति ?[8]

**निष्कूलकः** : न नाम भयम्। अस्माकं सूचनाशाखायां तावत्सुगृहीतनामधेयः[9] कक्षाध्यक्षः समागतः।

**कुसुमकिंजल्कः** : अस्माकं साधारणप्रबन्धनशाखायां समागतः कक्षाध्यक्षस्तु नितरां कर्कशः कर्मकठिनश्च[10] श्रूयते।

---

१. प्रश्नशाखा=Question Section,

२. समितिशाखा=Committee Sec.

३. विधिकार्यशाखा=Legislative Sec.

४. मुद्रणशाखा=Printing Sec.

५. सूचनाशाखा=Notice Office.

६. स्वागतकार्यशाखा=Reception Office.

७. अप्रत्याशितं सत्=Unexpectedly.

८. 'वहाँ वह किसका भेजा निकालेगा' इति हिन्दीभाषागतो वाक्याशयः।

९. सुगृहीतनामधेयः=अतिमात्रमादरणीयः।

१०. कर्मणि—कार्यनिलयकर्मणां परिपालनादिविषये कठिनः—निरतिशयनिष्करुणस्वभाव इत्यर्थः।

**शुष्ककूलकः** : एतेन संस्थापनशाखागतस्य खण्डकूष्माण्डकस्य सुप्रियं संजातमिति तर्कयामि ।

**खण्डकूष्माण्डकः** : नूनं सुप्रियं संजातम् । नूतनः शाखाध्यक्षः सुतरां सुप्रबुद्धधिषणः । अतिमात्रं प्रसन्नबुद्धिः । परमकारुणिकस्वभावः । सर्वथा सुस्निग्धविनोदवार्त्ताप्रियश्च ।

**निष्कूलकः** : कक्षाध्यक्षाणां परिवर्त्तनं तु संजातम् । परं कर्मकृत्समुदायस्यापि[1] परिवर्त्तनं जायेत चेत्सुप्रियं भवेत् ।

**कुसुमकिंजल्कः** : तेन त्वदीयमेव सुप्रियं भवेज्जातु[2] ।

**निष्कूलकः** : त्वदीयमपि भविष्यति ।

**शुष्ककूलकः** : अये, आसादनपरिप्रेषणशाखाकक्षाध्यक्षस्य[3] परिवर्तनं कस्मान्न कृतम् ?

**कुसुमकिंजल्कः** : तच्छाखाकक्षाध्यक्षस्याऽपरिवर्तनमेव श्रेयः ।

**खण्डकूष्माण्डकः** : तस्यापि वराकस्य 'त्रायस्व-त्रायस्वे'ति जातं भवेत् । अहर्निशं कार्यवैयग्र्यमेव-कार्यवैयग्र्यम् !

**कुसुमकिंजल्कः** : अदृष्टगतिरेव तादृशी तस्य वराकस्य ।

**निष्कूलकः** : केवलं कक्षाध्यक्षपरिवर्त्तनस्यैवादेशाः प्रचारिताः; न पुनः कस्यापि पदवर्धनस्य[4] पदभ्रंशनस्य[5] वा ?

**खण्डकूष्माण्डकः** : तादृशा आदेशा नैव प्रायेण प्रचार्यन्तेऽस्माकं

---

१. कर्मकृत्समुदायः=Staff इत्यांग्लभाषायाम् ।

२. जातु=कदाचित् । 'शायद' इति भाषायाम् ।

३. आसादनपरिप्रेषणशाखा=Receipt & Issue Section.

४. पदवर्धनम्=Promotion इत्यांग्लभाषायाम् ।

५. पदभ्रंशनम्=Demotion इत्यांग्लभाषायाम् ।

कार्यनिलये। कार्यनिलयस्यैतस्याऽयमेव विशेषः।

**शुष्ककूलकः** : यदपि परिवर्त्तनं जायते तत्सर्वथैव श्रेयसे भवति।

**निष्कूलकः** : सत्यं नामैतत्। परिवर्त्तनेन नूतनं जीवितं समागतमिवानुभूयते।

**खण्डकूष्माण्डकः** : (**स्वगतम्।**) एतदुभयमपि सुप्रियं संजातम्। कर्कशः कक्षाध्यक्षः शाखान्तरितः।[1] अथ चाद्य मदीयमाणकत्रयमपि सुरक्षितं स्थितम्। फलानि पुनस्तावन्ति भक्षितानि यैर्बुभुक्षाऽपि मे शान्ता संजाता। अथ गत्वा केचित् कर्गडकाः[2] प्रेषणालयादानेतव्याः।[3] (**प्रकाशम्।**) सखायः, नितरामनुगृहीतोस्मि। अथ कार्यान्तरमिति गन्तुं भवतामादेशोऽभिलष्यते।

**कुसुमकिंजल्कः** : तिष्ठ। अहमपि तवानुपदमेव समागच्छामि।

(**कुसुमकिंजल्कखण्डकूष्माण्डकौ विनिर्गतौ।**)

**शुष्ककूलकः** : अथ निष्कूलक, त्वदीयं गुरुतरं कार्यं किमप्यासीदिति त्वं

---

१. शाखान्तरितः=अन्यस्यां शाखायां विनिवेशितः। Transferred to some other Section इत्यांग्लभाषायाम्।

२. आंग्लभाषागतस्य Card शब्दस्यार्थे 'कर्गडक' इत्येतस्य शब्दस्य योजनायां किंचिन्निरंकुशत्वं कविसाम्प्रदायिकं स्वीकृतमस्ति। अथ सामान्यतया Paper इत्येतस्यार्थे संस्कृतभाषायां कर्गल इत्येष शब्दः प्रयुक्तो भवति। यथा 'कल्पन्या कृन्तति कर्गलमि'त्यत्र। तस्यैव डलयोरभेद इति नियमेन 'कर्गडो' विहितः। स च स्वार्थे ह्रस्वार्थे वा विहितेन कन्प्रत्ययेन card इति विशिष्टार्थे 'कर्गडक' इति रूपेण व्यवस्थापितः। एतेन कर्गलगतं यच्छ्रुतिकोमलत्वं, तदपगतं भवत्येव किंचित्कठिनत्वमपि तस्य ध्वनितं भवति। प्रायेण 'कार्ड' इत्याख्यं पत्रं पत्रसामान्यापेक्षया किंचित्कठिनमनमनायमेव भवति।

३. प्रेषणालयः=Post Office इत्यांग्लभाषायाम्।

तदानीमवोचः । पश्चात्सर्वं वक्ष्यत इति प्रतिज्ञातवानसि । तद्ब्रूहि किमासीत्तत् ?

**निष्कूलकः** : अद्य करपल्लवाटकाख्यान्नगरभागात् कुरुपकुन्तलाख्यस्य ग्रन्थमुद्रणकलामन्दिरस्य प्रधानश्चालको मदीयमेकं प्रत्यग्रलिखितं संस्कृतपुस्तकं मुद्रणाय ग्रहीतुं समागत आसीत् । कार्यनिलय-वेलायामेवासौ तद्व्यवहारवार्तां कर्त्तुकाम आसीत् । परं विद्य-माने शाखाकक्षाध्यक्षे तादृशव्यवहारजातं नियमबाह्यत्वान्नैव कर्त्तुं शक्यत इति मध्याह्नाशवेलाप्रारम्भं यावत्प्रतीक्षाशालायामेव[1] स्थातव्यमिति स मया प्रार्थितः । अथ प्रारब्धायां मध्याह्नाश-वेलायां तेन साकं व्यवहारवार्तालापो विधातव्य आसीत् । तस्मा-द्विलम्बः संजातः ।

**शुष्ककूलकः** : अथ आघाटितः[2] किं व्यवहारः ?

**निष्कूलकः** : आघाटितः । तेन मम हस्तलिखितं गृहीतमपि ।

**शुष्ककूलकः** : अथ संगृहीतः किं मुद्रणनिधिः ?

**निष्कूलकः** : नास्ति संगृहीतः । प्रतिमासं लभ्यमानाद्वेतनाद् रूप्य-काणां शतमेकतो निष्कास्य मुद्रणार्थं दातव्यमिति निर्धारित-वानस्मि ।

**शुष्ककूलकः** : कति पृष्ठानि मुद्रितस्य पुस्तकस्य भविष्यन्तीत्यनुमीयते ।

**निष्कूलकः** : एकादश षोडशका[3] भविष्यन्तीति स्थूलमनुमानम् ।

---

१. प्रतीक्षाशाला=Waiting Hall इत्यांग्लभाषायाम् ।

२. आघाटितः किम्=सम्पूर्णत्वेन अन्तिमत्वेन च विहितः किमित्यर्थः ।

३. षोडशकः='Form' इत्यर्थः । (षोडशपृष्ठानां समाहारः आंग्लभाषायां form इति निगद्यते ।)

**शुष्ककूलकः** : प्रतिषोडशकं कति रूप्यकाणि पुस्तकमुद्रणस्य भविष्यन्ति ?

**निष्कूलकः** : रूप्यकाणां षट्सप्ततिः प्रतिषोडशकं मुद्रणमूल्यं भविता ।

**शुष्ककूलकः** : मन्ये महार्घोऽयं[1] व्यवहार आघाटितस्त्वया ।

**निष्कूलकः** : अव्युत्पन्नव्यवहारतन्त्राणामीदृशमेवाघाटनम् । महार्घो वा स्यात्स्वस्तो[2] वा स्यादेकदाऽऽघाटिते व्यवहारे सर्वमशोच्यं भवति । मम तावद् व्यवहारवस्तुनि न तादृशी श्रद्धा, यादृशी परेषां सम्भाव्यते । चिकीर्षितं तावत्कार्यं कुशलतया प्रतिपन्नं स्यादित्येष एव मे श्रद्धेयो विषयः ।

**शुष्ककूलकः** : (**स्वगतप्रायम् ।**) कस्य कः श्रद्धेयो विषय इति किं वक्तुं शक्यते ? (**सर्वथा प्रकाशम् ।**) अथ कदा सम्भाव्यते मुद्रणकार्यसम्पूर्तिः ?

**निष्कूलकः** : इदानीं प्रारब्धस्य कार्यस्य द्वाभ्यां मासाभ्यां कदाचित्पर्यवसानम् ।

**शुष्ककूलकः** : सर्वं शोभनम् । (**मणिबन्धवेलायन्त्रकं विलोक्य ।**) अस्तु । साम्प्रतं द्विवादने द्वौ निमेषौ शिष्येते । तच्चलितव्यं नामेदानीं स्वनियोगस्थानम्प्रति ।

**निष्कूलकः** : ओम् । चलितव्यमेव ।

(**इत्युभावपि निष्क्रान्तौ ।**)

इति पंचमे संवादे द्वितीयं दृश्यम् ।

इति पंचमः संवादः ।

---

१. 'महंगा' इति भाषायाम् । 'महाग' इति मराठीभाषायाम् ।

२. 'सस्ता' इति भाषायाम् । मराठीभाषायामपि 'स्वस्त' इत्ययमेव शब्दप्रयोगः ।

(ततः प्रविशत्यासनस्थः कार्यनिलयशाखाकक्षाध्यक्षः स्वस्मिन्स्वस्मिन्का-) र्यासने[1] समुपविष्टा अन्ये कर्मकृतश्च[2] ।)

**कक्षाध्यक्षः** : (पत्रलेखनं नाटयन् स्वगतम् ।) अद्य बहुत्र पत्राणि प्रेषणीयानि । नूतनसंवत्सरस्य प्रथमो दिवसः । बहूनि मित्राणि । कस्मै-कस्मै पत्राणि लिखित्वा नूतनवर्षाभिनन्दनानि प्रेषितव्यानीति न सम्यगवधार्यते । पञ्च पत्राणि तावल्लिखितानि । इतोऽपि पञ्चदश पत्राणि लेखनीयानि । (इति पुनरपि पत्रलेखनं नाटयति । क्षणानन्तरं विमृश्य स्वगतम् ।) अथ कक्षप्रैष्यमाहूय[3] यानि पत्राण्यवसितानि[4] तानि तावत्प्रेषयामि । (इति स्तम्भफलकस्थां घण्टिकां टणत्करोति ।)

(प्रविश्य ।)

**प्रथमः कक्षप्रैष्यः** : (कक्षाध्यक्षमुपसृत्य ।) अपि भवताऽऽहूतोऽस्मि ?

**कक्षाध्यक्षः** : हुम् । शृणु । पत्रक्षेपण्यां[5] पत्राणीमानि क्षेप्तव्यानि ।

---

१. कार्यासनम्=Seat.

२. कर्मकृतः=कर्मचारिणः ।

३. कक्षप्रैष्यः=Peon working in the Section इत्यांग्लभाषायाम् । 'चपरासी' इति भाषायाम् ।

४. येषां पत्राणां लेखनकार्यं पूर्णतां गतं तानीत्यर्थः ।

५. पत्रक्षेपणी=Letter box इत्यांग्लभाषायाम् ।

तत्रावसक्तकर्गलिकायां[1] कदा खल्वेतदनन्तरः क्षेपनिष्कासः[2] सोऽपि ज्ञातव्यः। (इति तस्मै पत्राणि प्रयच्छति।)

**प्रथमः कक्षप्रैष्यः** : (पत्राण्यादाय।) साधु तर्हि। (इति निर्गच्छति।)

**प्रथमः कार्योपस्थापकः**[3] : (स्वगतम्।) चतुर्वादनवेला संजाता। श्रमः संजायते। कामरूपिकाकषायग्रहणार्थं गन्तव्यम्। यावत्कक्षाध्यक्षमापृच्छामि। (इति स्वासनादुत्थाय शाखाकक्षाध्यक्षमुपसर्पति।)

**कक्षाध्यक्षः** : (पत्रलेखने दत्तावधानः स्वगतम्।) लेखं-लेखं करः संश्रान्तः। लेख्यं नैव समाप्तिमायाति। (पुरःस्थं कार्योपस्थापकं विलोक्य।) अद्य कति प्रकरणानि[4] निःशेषितानि[5] ?

**प्रथमः कार्योपस्थापकः** : द्वित्राण्येवासन्। सर्वाण्यशेषितानि। इदानीं श्रान्तिरनुभूयते। कषायग्रहणार्थं गन्तुमर्हामि किम् ?

**कक्षाध्यक्षः** : का वेला ?

**प्रथमः कार्योपस्थापकः** : चत्वारि वाद्यन्ते।

**कक्षाध्यक्षः** : हन्त, चत्वारि संजातानि ? (सस्मितम्।) अद्य पत्रलेखनव्यवसाये समयस्याप्यवच्छेदो[6] विस्मृतः।

**प्रथमः कार्योपस्थापकः** : कुत्र प्रेष्यन्ते तावन्ति पत्राणि ?

---

१. कर्गलिका = Slip इत्यांग्लभाषायाम्।

२. क्षेपनिष्कासः = Clearance इत्यांग्लभाषायाम्।

३. कार्योपस्थापकः = Assistant.

४. प्रकरणानि = Cases इत्यांग्लभाषायाम्।

५. निःशेषणम् अशेषणं वा = To dispose of.

६. अवच्छेदः = इदमित्थन्तया बोधः। अत्र भानम् इत्यर्थः।

**कक्षाध्यक्षः** : कानिचिन्मित्राणि, केचिद् बान्धवाः, केचित्पदाधिकारिणः[1] —ऐतेभ्यः सर्वेभ्यः प्रेषणीयानि । श्रान्तिस्तावन्मयाप्यनुभूयते । भवदागमनेन कषायग्रहणवेलां स्मारितोऽस्मि ।

**प्रथमः कार्योपस्थापकः** : तर्हि भवताप्यागम्यताम् ।

**कक्षाध्यक्षः** : अस्तु । आगम्यते । (**इत्यासनादुत्थानं नाटयति ।**)

**प्रथमः कार्योपस्थापक** : : प्रभूत आयासः पत्रलेखनस्य स्वीकृतोऽद्य !

**कक्षाध्यक्षः** : कादाचित्क एवायमायासः स्वीकर्त्तव्य एव भवति ।

(**अत्रान्तरे सम्भाषयन्त्रस्य क्लैङ्कारः[2] श्रूयते ।**)

हन्त, सर्वथा निर्गमोपकण्ठ एवैषा विबाधा । (**इति सम्भाषयन्त्रकर्णकमुत्थाप्य[3] कर्णस्य मुखस्य च समीपं नीत्वा तस्मिन्नेव ।**) एष विधिकार्यशाखाकक्षाध्यक्षो ब्रवीमि ।…हुम् ।…अहमेव । किमादिश्यते ? …..कः ?…..कस्मिन्विषये ?…मया नैव ज्ञायते ।…कदा ? ……हन्त, नावलोकितम् । (**चिन्तापर्याकुलं वदनं रूपयित्वा ।**) किमुच्यते ?…अवरसचिवमहाभागः[4] …हन्त, एष आयातः । (**इति कर्णकं सम्भाषयन्त्राधारे संस्थाप्य प्रथमं कार्योपस्थापकमुद्दिश्य ।**) अत्याहितम् ! अद्य कश्चन महान् प्रमादः[5] संजात इव । अवरसचिवो मां स्मरति । तत्तत्रैव गम्यते । भवानपि कंचित् कालमत्रैव

---

१. पदाधिकारिणः='Officers' इत्यांग्लभाषायाम् ।

२. क्लैङ्कारः=Ringing sound.

३. सम्भाषयन्त्रकर्णकः=Telephone receiver.

४. अवरसचिवः=Under Secretary.

५. महान् प्रमादः=Mistake of a very serious nature.

तिष्ठतु । कदाचिद् भवानप्याहूयेत ।

(इति ससम्भ्रमं निर्गतः ।)

**प्रथमः कार्योपस्थापकः** : (स्वगतम् ।) हन्त, महती विपत्तिः । (इति स्वकार्यासनं गत्वोपवेशनं नाटयति ।)

**द्वितीयः कार्योपस्थापकः** : (प्रथमं कार्योपस्थापकमुद्दिश्य ।) कथमकाण्ड एव विघ्नितकषायोऽसि ?[१]

**प्रथमः कार्योपस्थापकः** : न जाने, केन बाह्यकेन मुण्डाकुमारकेणैतेषां पदाधिकारिणां किं गन्धितम्[२] ?

**द्वितीयः कार्योपस्थापकः** : केनाहूतोऽयम्भ्रातृव्यस्ते[३] कक्षाध्यक्षकः ?

**प्रथमः कार्योपस्थापकः** : केनेति किम् ? तव पितृव्यश्वशुरकेणावरसचिवेनैव[४] !

(कक्षस्थाः शेषास्त्रयोऽपि कार्यंकरा[५] हसन्ति ।)

**अन्यतमः कार्यंकरः** : एकेन प्रयुक्ते 'भातृव्ये'ति पदे द्वितीयेन सम्यगुत्तीर्णं 'पितृव्यश्वशुरके'ति पदमाविष्कुर्वता ।

**परः कार्यंकरः** : दण्डकाष्ठमुद्यम्य कृतस्य प्रहारस्य लौहकाष्ठेन दत्तः समीचीन एष प्रतिप्रहारः ।[६]

---

१. How is it that you are deprived of your tea so untimely ?' इति वाक्याशयः ।

२. गन्धनम्=To Complain against some body with evil intentions.

३. भ्रातृव्यः=भ्रातुः सुतः । भ्रातृजः । 'भतीजा' इति भाषायाम् ।

४. पितृव्यः=पितुः सहोदरः । तस्य श्वशुरकः पितृव्यश्वशुरकः ।

५. कार्यंकरः=Clerk.

६. 'ईंट का जवाब पत्थर से बहुत ठीक रहा' इति वाक्याशयः ।

**अपरः कार्यकरः** : सम्यक् त्रुटिता नाम काकत्रोटिः[१] ।

(पुनरपि सम्भाषयन्त्रस्य क्लैङ्कारः श्रूयते ।)

**प्रथमः कार्योपस्थापकः** : (प्रजवं धावित्वा यन्त्रकर्णकमुत्थाप्य ।) एष विधिकार्यशाखाकक्षः !....हुम् ।....आगन्तव्यम् ?....किंसंख्यः प्रगुम्फकः[२] ?...षट्संख्यः प्रगुम्फकः स्मर्यते ।...वरम् । एष पश्यामि । अथ किं कर्त्तव्यम् ?...तत्रैव समागन्तव्यं गृहीत्वा ? ...एष आगच्छामि ।

(यन्त्रकर्णकं यथास्थानं स्थापयित्वा स्वस्थानाच्छट्संख्यं प्रगुम्फकमादाय निर्गच्छति ।)

**कार्यकरः** : हन्त, गतस्तपस्वी । केनाहूतो भवेत् ?

**अन्यतमः कार्यकरः** : अवरसचिवकक्षवर्त्तिनाऽस्मत्कक्षाध्यक्षेणेति तर्कयामि ।

**परः कार्यकरः** : किमद्यापतितमीदृशम् ?

**अपरः कार्यकरः** : भवेत्किमपि । किमस्माकमेतेन ? कार्यनिलये परश्शतानि तथाविधानि प्रत्यहमापतन्ति । कस्य कश्चिन्तां वहतु ? 'स्वस्थेन मनसा तिष्ठेत्कषायस्योदकं पिबेत्'[३] एष एवास्मादृशां शासनकार्यनिलयनियुक्तकानां[४] परमो धर्मः ।

---

१. काकत्रोटिः='कौए की चोंच' इति भाषायाम् ।

२. प्रगुम्फकः=File.

३. वाक्यार्थ ईदृशः—'आराम से बैठे रहो और चाय का पानी पीते रहो ।' ('विना कारणं चिन्ता नैव कर्त्तव्या परस्य वस्तुनी'ति प्रसङ्गतोऽभिप्रायः ।)

४. Of we people who are employed in the Govt. offices.

**द्वितीयः कार्योपस्थापकः : (तत्रस्थं कक्षसहायमुद्दिश्य।)** बन्धो, अद्यास्मदीयमेकं कृत्यं सम्पादनीयं त्वया।

**कक्षसहायः** : किमस्ति तत् ?

**द्वितीयः कार्योपस्थापकः** : एते मन्वन्तरपुराणा जीर्णप्रगुम्फका एतस्मान्मदीयात्कार्यासनादपसार्य कुत्रापि कोणान्तरे प्रक्षेप्तव्याः। नाहमेतानत्र स्थितान् दृष्ट्वा मनःस्वास्थ्यमनुभवामि।

**कक्षसहायः** : श्वः करिष्ये।

**द्वितीयः कार्योपस्थापकः** : अये, श्वः किं करिष्यसि ? कुर्विदानीमेव। शुभस्य शीघ्रम्।

**कक्षसहायः** : इदानीं तावत्कार्यनिलयकालसमाप्तिर्नेदीयसी। श्वः प्रभाते प्रथमसम्पाद्यं कार्यमिव[1] भवदुपदिष्टं करिष्यामि।

**द्वितीयः कार्योपस्थापकः** : यथा रोचते ते। परमविस्मरणपूर्वकं करणीयं श्वः।

**(ततः प्रविशति पत्रसम्भारहस्तः[2] शाखान्तरकक्षप्रैष्यः।)**

**शाखान्तरकक्षप्रैष्यः : (शाखाकक्षाध्यक्षकार्यासनं शून्यं दृष्ट्वा द्वितीयकार्योपस्थापकमुपेत्य।)** एष पत्रसम्भारः क्व स्थाप्येत ?

**द्वितीयः कार्योपस्थापकः** : पश्येयं कीदृशः पत्रसम्भारोऽयमिति। को वेसवारः[3] समुपानीतोऽस्मदर्थमित्यवलोक्यताम्।

**(इति प्रैष्यहस्तात्तं स्थूलं पत्रसम्भारमादत्ते। एकैकशश्च पत्राण्युपर्यधः करोति।)** एष मदीयः प्रगुम्फकः। किमादिष्टमत्र सचि-

---

१. 'First thing in the morning' इत्याशयः।

२. 'With a bundle of papers' इत्यर्थः।

३. को वेसवारः=का सामग्री इत्याशयः।

वेन ?…हन्त, सर्वथाऽस्पृष्ट एव मम लेखोपन्यासः । अथेदं किम् ? इदन्तावन्नूतनमासादितकम्[1] । इदमपि । इदमपि । अयम्प्रगुम्फक: परस्य कार्योपस्थापकस्य । अस्तु । (**शाखान्तरकक्षप्रैष्यमुद्दिश्य ।**) एवं क्रियताम् । इमौ प्रगुम्फकौ तावत्कक्षाध्यक्षस्य स्तम्भफलके स्थापय —तस्यां धातुमञ्जूषायाम् । एतानि चासादितकानि तं कार्यकरं हस्तान्तरय । असौ निवेशपञ्जिकायाम्[2] एतेषां निवेशनं[3] करोतु ।

(**इति तं पत्रसम्भारं तस्मै प्रैष्याय प्रयच्छति ।**)

**शाखान्तरकक्षप्रैष्यः :** (**यथानिर्दिष्टं विधाय ।**) अथ गच्छेयम् ?

**द्वितीयः कार्योपस्थापकः :** आम् । गच्छ त्वम् ।

(**शाखान्तरकक्षप्रैष्यो निर्गतः ।**)

**निवेशनिकः कार्यकरः :** (**आसादितकान्यादाय ।**) कः समयः पश्यन्तु भवन्तः एषामासादितकानाम्? (**आसादितकेषु यथाक्रमं स्वशाखामुद्रां[4] संनिवेश्य मुद्रागते समयनिवेशस्थाने तत्प्राप्तिसमयं, क्रमांकनिवेशस्थाने च क्रमाङ्कं[5] यथाक्रमं निवेश्य तद्गतां विषयविवृतिं समासतः पञ्जिकायां प्रवेशयति ।**) समयो वाऽसमयो वा मदीयं तु मया निर्वर्त्तितमेव कार्यम् । अथैतदूर्ध्वं येषां कार्यं ते जानन्तु । (**स्तम्भफलकस्थां घण्टिकां टणत्कृत्य समागतं द्वितीयं कक्षप्रैष्यमुद्दिश्य ।**) शृणु, इमे द्वे आसादितके प्रथमस्य कार्योपस्थापकस्य । तस्य मञ्जूषायां स्थापनीये । इदं च तृतीयमासादितक-

---

१. आसादितकम्=प्राप्तिका । Receipt.

२. निवेशपंजिका=Diary register.

३. निवेशनम्=Entry.

४. स्वशाखामुद्रां संनिवेश्य=After putting the stamp of his section.

५. क्रमाङ्कः=क्रमसंख्या । Serial number.

मस्य द्वितीयस्य कार्योपस्थापकस्य । (इति तानि तस्मै प्रयच्छति ।)

**द्वितीयः कक्षप्रैष्यः** : वरम् । (इति तानि समादाय द्वितीयकार्योपस्थापक-मुपसृत्य ।) इदम्भावत्कम् । (तस्मै प्रयच्छति । शेषे द्वे प्रथमस्य कार्योपस्थापकस्य स्तम्भफलकस्थायां मञ्जूषायां सुरक्षितं स्थापयित्वा कक्षाद् बहिर्निर्गच्छति ।)

**अन्यतमः कार्यकरः** : (परं कार्यकरमुद्दिश्य ।) किम्भोः, अद्य कति मक्षिका मारिताः ?

**परः कार्यकरः** : नैव पश्यसि—तावत्य एव यावत्यस्त्वया मारिताः ।

**अन्यतमः कार्यकरः** : तर्हि केवलं मक्षिकामारणस्यैव वेतनं गृह्णासि शासनयन्त्रतः ?

**परः कार्यकरः** : अथ त्वया किमुन्दुरवो[1] मार्यन्ते, येनैवं वचनं क्षिपसि ?

**कक्षसहायः** : (तयोर्मध्येऽनाहूतमात्मानं तृतीयं कृत्वा ।) अयि भोः, उन्दुरवः केन मार्यन्ते ? तेन नः शाखाकक्षस्य बहुतरं सुहितं भवेत् । बहव उन्दुरवः शाखाभित्तिकपाटिकासु[2] । सर्वाण्यपि तैः प्रगुम्फक-पत्राणि जर्जरीकृतानि । तर्हि कश्चनोन्दुरुमारको भवेद्, येन सा पीडा निःशेषिता स्यात् । (इति हसति ।)

**परः कार्यकरः** : (संजातरोषः सन् कक्षसहायमुद्दिश्य ।) संयच्छ जिह्वाम् ! दास्याः पुत्रः—(इत्यर्धोक्ते ।)

**कक्षसहायः** : 'दास्याः पुत्र' इति कः सम्बोध्यते ?

**परः कार्यकरः** : त्वं सम्बोध्यसे ।

---

१. उन्दुरुः = Rat. 'उंदीर' इति मराठीभाषायाम् ।

२. कपाटिका = अलमारिका । Almirah.

**कक्षसहायः** : एष असंसदीयः शब्दप्रयोगः[1] । कृपया प्रत्यादीयताम्[2] । नोचेदहं शाखाकक्षाध्यक्षं सूचयिष्यामि ।

**परः कार्यकरः** : (**सरोषमीषत्तारस्वरेण ।**) कक्षाध्यक्षं किं कक्षाध्यक्षस्य पितरं सूचय । तच्छब्दप्रयोगार्ह एव त्वम् । अन्यथा परस्परं वचनव्याहारवतोरावयोर्मध्ये त्वं न मुधैव समागमिष्यः । तदिदानीं संयच्छ वाचम् ।

**कक्षसहायः** : 'संयच्छ'—'संयच्छे'ति किमाम्रेड्यते ?[3] वाक्स्वकीयैव संयम्यताम् ।

**परः कार्यकरः** : (**क्षणं यावद्विचिन्त्य किंचिद्विनमितस्वरेण ।**) एवम् ? त्वमतिमात्रं वाचालः संजातोऽसि । भवतु । नाहं त्वया सह विवादं चिकीर्षामि । तूष्णीं भव ।

**कक्षसहायः** : तूष्णीमेव तिष्ठामि । परं कार्यनिलये स्थितवताऽसंसदीयः शब्दप्रयोगो नैव विधातव्यः ।

**परः कार्यकरः** : पुनस्तदेव प्रकरणम्—?

**कक्षसहायः** : (**विहस्य ।**) संजातं मे मनीषितम् । अथ जिह्वामेव संयच्छामि ।

**अपरः कार्यकरः** : (**उद्ग्रीवं कक्षवातायनाद् बहिर्विलोक्य ।**) शान्तं पापं —शान्तं पापम् ! कार्यकरस्य कक्षसहायेन विवादः ! शान्तं पापं—शान्तं पापम् !!

---

१. असंसदीयः शब्दप्रयोगः=Unparliamentary expression.

२. कृपया प्रत्यादीयताम्=Please, withdraw it.

३. आम्रेड्यते=पुनः पुनः कथ्यते ।

(ततः प्रविशति प्रथमकार्योपस्थापकद्वितीयः शाखाकक्षाध्यक्षः। सर्वे वाक्संयमनं नाटयन्ति।)

कक्षाध्यक्षः : कथमपि नाम रक्षिताः प्राणाः। 'जीवन्नरो भद्रशतानि पश्येत्।'

प्रथमः कार्योपस्थापकः : एवं किमपि भविष्यतीति स्वप्नेऽपि नैवासीत्कलिपतम्।

कक्षाध्यक्षः : अथ कस्मिन्समये किमापतिष्यतीति नैव विज्ञायते। नियम एव नास्ति कश्चित्।

प्रथमः कार्योपस्थापकः : परमद्यास्माकं कषायग्रहणं तावन्मात्रमन्तरायितमेतेन।

कक्षाध्यक्षः : (विहस्य।) कषायग्रहणान्तरायस्य का मात्रा? कार्यनिलयवेलावसाने गृहं गत्वापि ग्रहीतुं शक्यते कषायः।

द्वितीयः कार्योपस्थापकः : अद्य किं तादृशमासीत्संजातम्?

कक्षाध्यक्षः : (सस्मितम्।) आसीत्किमपि तादृशं गोपनीयं वस्तु।

प्रथमः कार्योपस्थापकः : आम्। तद् गोपनीयमेव। नैव सर्वेषु प्रकाशनीयम्।

द्वितीयः कार्योपस्थापकः : (सस्मितम्।) अस्मास्वपि गोपनीयम्भवति किञ्चित्?

अपरः कार्यकरः : कस्मान्न भवेद् गोपनीयम्? उक्तं चापि—'दारेषु किंचित्स्वजनेषु किंचिद् गोप्यं वयस्येषु सुतेषु किंचिद्' इति। तत्सर्वथा गोपनीयमेतदपि—न प्रकाशनीयम्।

(सर्वे स्मितं रूपयन्ति।)

(प्रविश्य ।)

**प्रथमः कक्षप्रैष्यः :** (कक्षाध्यक्षमुपसृत्य ।) क्षिप्तानि पत्राणि ज्ञातश्च क्षेपनिष्कासससमयः—पञ्चवादनादूर्ध्वं पञ्चभिर्निमेषैरिति ।

**कक्षाध्यक्षः :** (प्रथमं कक्षप्रैष्यमुद्दिश्य ।) आस्तां नाम क्षेपनिष्कासससमयः । इदानीन्तावत् प्रथमतः काचकंसमितं[1]-पानीयमानय । शुष्को मे गलः ।

**सर्वे :** (प्रथमं कक्षप्रैष्यमुद्दिश्य ।) पानीयन्तावद् बन्धो, अस्माभिरपीष्यते । यद्यनुग्रहः स्यात् ।

**प्रथमः कक्षप्रैष्यः :** तर्हि पानीयपूर्णं काचस्य भृङ्गारमेवोपानयामि[2] । (इति निर्गतः ।)

**निवेशनिकः कार्यकरः :** पञ्चवादनन्तु जातप्रायम् ।

**कक्षाध्यक्षः :** आः पञ्चवादनं जातम् । तर्हि सर्वमपि मञ्जूषादिकं भित्तिकपाटिकासु स्थापयित्वा निर्गन्तव्यमिदानीम् ।

(प्रविश्य प्रथमः कक्षप्रैष्यः कंसेषु भृंगारेण पानीयं पूरयित्वा क्रमेण सर्वान्पाययति ।)

**कश्चन :** (सविनोदम् ।) पायय बन्धो, पानीयमेव पायय—कामरूपिकाकषायं वा बहुमूल्यं किंचन शर्करोदकं[3] वा कुतः पाययिष्यसि ।

**प्रथमः कक्षप्रैष्यः :** इदमेव कार्यनिलयगतं वितरणसुलभं शर्करोदकमिति मत्वा पीयताम् पानीयम् ।

---

१. काचकंसः = Glass tumbler. काचकंसमितं पानीयम् = Glassful of water.

२. काचस्य भृङ्गारः = Jug.

३. शर्करोदकम् = 'शरबत' इति भाषायाम् । Syrup इत्यांग्ल-भाषायाम् ।

**अपरः** : अहो, काचभृङ्गारेण सुचित्ररेखाङ्केषु स्फटिकनिर्मलेषु काचकंसेषु पूर्यमाणं पानीयमिदं कण्ववर्त्तुलश्रृङ्गाटकस्थेऽवशनालयेषु दीयमानं परदेशीयमासवद्रवमप्यतिशेते; कैव कथा ननु सामान्यानां शर्करोदकानाम् ?

**अन्यः** : प्रत्यहं रूप्यकचतुष्टयमर्जयतामस्मादृशां कार्यकराणामेतदेव वचनं सन्तोषावहम् ।

**कक्षाध्यक्षः** : (**द्वितीयं कक्षप्रैष्यमुद्दिश्य ।**) सत्वरमन्तः स्थापय सर्वाण्यपि कक्षगतानि वस्तूनि । (**अन्यानुद्दिश्य ।**) अद्य सत्वरमेव छायागृहमपि गन्तव्यं वर्त्तते ।

**कार्योपस्थापकौ** : अद्य किं छायागृहस्यापि कार्यक्रमः ? गृहीतं किम्प्रवेशपत्रम् ?

**कक्षाध्यक्षः** : क्रीतचरन्तत् । अद्य केचन बान्धवाः समागता मदीयाज्जन्मनगरात् । तैरेव निर्धारितः कार्यक्रमोऽयम् ।

**कार्योपस्थापकौ** : क्व यास्यते ?

**कक्षाध्यक्षः** : कण्ववर्त्तुलश्रृंगाटकं यास्यते ।

**कार्योपस्थापकौ** : तर्हि गन्तव्यं श्रीमता । शेषमावां द्रक्ष्यावः ।

(**ततः प्रविशति शाखान्तरकक्षप्रैष्यः ।**)

**कक्षाध्यक्षः** : (**तमेवोद्दिश्य ।**) अये किमानीतम् ? अस्मिन्नपि समये नैव पिण्डमोक्षः[1] किं जीवस्य ?

**शाखान्तरकक्षप्रैष्यः** : (**सस्मितम् ।**) कार्यनिलयपत्राणि नैवानीतानि । भावत्कं वैयक्तिकं पत्रमस्ति ।

---

१. पिण्डमोक्षः='छुटकारा' इति भाषायाम् ।

**कक्षाध्यक्षः** : आः, मदीयं वैयक्तिकं पत्रम् । **(पत्रं प्रैष्यहस्तादादाय ।)** धन्यवादाः ।

**(शाखान्तरकक्षप्रैष्यो निर्गतः ।)**

**(कार्योपस्थापकावुद्दिश्य ।)** किमस्ति कार्यान्तरं भवतोरत्रावस्थानस्य ? भवन्तावपि गच्छताम् ।

**(द्वितीयः कक्षप्रैष्यः सर्वाणि वस्तूनि कक्षभित्तिकपाटिकासु स्थापयति ।)**

**सर्वे : (प्रस्थानं नाटयन्तः कक्षाध्यक्षमुद्दिश्य ।)** अस्तु । नमस्कृतयः ।

**कक्षाध्यक्षः** : नमस्कृतयः । **(द्वितीयं कक्षप्रैष्यमुद्दिश्य ।)** स्थापितानि किम्भोः, सर्वाणि वस्तूनि ? विष्कम्भं[1] समासज्य तस्योद्घाटनीं[2] प्रयच्छ तावच्छीघ्रम् । द्रागगन्तव्यमस्ति । **(प्रथमकक्षप्रैष्यमुद्दिश्य ।)** गच्छ भोः, त्वं कक्षपिधायकं[3] तावदाहूय समागच्छ ।

**प्रथमः कक्षप्रैष्यः** : एष गच्छामि । **(निर्गतः ।)**

**द्वितीयः कक्षप्रैष्यः** : समासक्तो विष्कम्भः । इयं तस्योद्घाटनी गृह्यताम् ।

**(इत्युद्घाटनीं समर्पयति ।)**

**(अन्त्रान्तरे पुनरपि सम्भाषयन्त्रस्य क्लैंकारः श्रूयते । प्रविशति च कक्षपिधायकद्वितीयः प्रथमः कक्षप्रैष्यः ।)**

**कक्षाध्यक्षः : (स्वगतम् ।)** हन्त, पुनः कस्य सन्देश आपतितः ?

---

१. विष्कम्भः = Lock. 'ताला' इति भाषायाम् ।

२. उद्घाटनी = Key. 'चाबी' इति भाषायाम् ।

३. कक्षं पिदधाति कार्यनिलयवेलावसाने यः स 'कक्षपिधायकः' । 'फराश' इति यावत् ।

(सम्भाषयन्त्रकर्णकमुत्थाप्य तस्मिन्नेव ।) विधिकार्यशाखाकक्षाध्यक्षो ब्रवीमि।······वरं-वरम् । एष आगतः । (इति यन्त्रकर्णकं यथास्थानं स्थापयित्वा कक्षप्रैष्यावुद्दिश्य ।) सचिवमहाभागेनाहूतोऽस्मि । यावदहमागच्छामि, तावद् युवाभ्यामत्रैव स्थातव्यम् ।

(निर्गतः ।)

**कक्षप्रैष्यौ :** (परस्पराभिमुखं पश्यन्तौ ।) अयं नाम कार्यनिलयः! निर्गमन-वेलायामपि कक्षाध्यक्षस्यागमनं प्रतिपालयद्भ्यामत्रैव स्थातव्यम् । तपस्विनश्छायागृहजिगमिषोः कक्षाध्यक्षस्यापि सैव स्थितिः । हन्त भोः, दुःखं नाम पारतन्त्र्यम् ।

**तयोरेकतरः :** 'उदरभरणमात्रकेवलेच्छोः पुरुषपशोश्च पशोश्च को विशेषः ?' इति यत्केनाप्युक्तं, तन्न वितथम् ।

**अन्यतरः :** सत्यं ब्रवीषि । 'अस्य दग्धोदरस्यार्थे कः कुर्यात्पातकं महद्' इति ब्रुवन्नपि 'दग्धे'ति विशेषणेन यदुदरं विशिनष्टि तदेतदर्थ-मेव ।

(इत्युभावपि भित्तिवेलायन्त्रं[1] पश्यन्तौ तिष्ठतः ।)

**कक्षविधायकः :** किं कारणं यदिदानीमपि स्थिराभ्यामेव स्थीयते युवाभ्याम् ?

**कक्षप्रैष्यौ :** कक्षाध्यक्षः सचिवमहाभागेनाऽऽहूतः । अन्तरेण तदागमनं कथं निर्गमनमावयोः ?

**कक्षविधायकः :** हन्त, तर्हि मयापि तदागमनं प्रतीक्षणीयं भवेत् । (इति भूमावुपविशति ।)

---

१. Wall-Clock.

(प्रतिनिवृत्य।)

**कक्षाध्यक्षः** : (विषण्णवदनः स्वगतम्।) हन्त, निर्गता छायागृहगमन-वेला। सर्वेषामपि ममागमनं प्रतीक्षमाणानां गृहबान्धवानां चित्तवैरस्यं संजातं भवेत्। निष्कारणमेवाहमेतावन्तं काल-मुपवेशितः। हन्त, ईदृशी नाम दुर्विभाव्या विधेयता[1]। (प्रैष्यावु-द्दिश्य प्रकाशम्।) गन्तव्यमिदानीं भवद्भ्याम्। अहमपि गच्छामि। श्वः प्रातर्दशवादनात्पूर्वमेव समागन्तव्यम्। प्रचुरं कार्यजातं तिष्ठति।

**कक्षप्रैष्यौ** : किं सार्धनववादनवेलायामागन्तव्यम्?

**कक्षाध्यक्षः** : बाढम्। (कक्षपिधायकमुद्दिश्य।) पिधेहि कक्षद्वारम्। श्वः प्रातः सार्धनववादनवेलायामुद्घाटनीयम्।

(इति कक्षाध्यक्षेण सहैव कक्षप्रैष्यौ निर्गतौ।)

**कक्षपिधायकः** : (स्वगतम्।) का गतिः? कार्यनिलयस्याश्रवत्वं[2] करणीयं तर्हि समयासमयविवेकं परित्यज्य यथादिष्टमधि-कारिभिस्तथा समाचरणीयमेव। का गतिः? (इति कक्षद्वारे स्थूलं विष्कम्भमेकं समासज्य निर्गतः।)

(निष्क्रान्ताः सर्वे।)

इति षष्ठः संवादः।

---

१. विधेयता=आज्ञाकारिता।

२. आश्रवत्वम्='चाकरी' इति भाषायाम्।

(ततः प्रविशत्येकस्तरुणस्तत्समनन्तरमेका तरुणीच ।)

**तरुणः** : (स्वगतम् ।) दृष्टं नाम प्रदर्शनं[1] गृहनिदर्शनानाम्[2] । अथ वेलायामेव स्वावासं प्रति गमनस्याऽपि किंचित्सौकर्यं संजायेत— कियच्छोभनं भवेत् ? (क्षणं स्थित्वा पुनरपि स्वगतम् ।) हन्त, इतोऽपि नगरयानं नैवायातम्। आयास्यति न वा को वेत्ति ? अथ एतदपि ज्ञातुं नैव शक्यते यदद्यतनमन्तिमं नगरयानं निर्गतं वा न वेति । (पुरतो विलोक्य स्वगतम् ।) एषा तरुणी कुतः सम्प्राप्ता साम्प्रतमेतस्यां विरलजनपदसंचारायां रात्रिवेलायाम् ? काचन भवेद् गृहप्रदर्शनविलोकनकांक्षया समागताऽत्र । परं कियदनया विलम्बितम् ? महिलाजनेन नैवं विलम्बनीयम् । परं किमेतया मम । भवतु विलम्बिताऽविलम्बिता वा ।

(इति नगरयानागमनदिशं विलोकयँस्तिष्ठति ।)

**तरुणी** : (तमुपसृत्य प्रतीक्षायासं नाटयित्वा ।) कापि वेलाऽनायातस्य नगरयानस्य !

**तरुणः** : (मुखं परिवर्त्य ।) इदानीं रात्रेः सार्धदशवादनम् । न वेद्मि नगरयानमायास्यति न वेति । अथ कुत्र भवती गन्तुकामा ?

---

१. प्रदर्शनम्=Exhibition.

२. गृहनिदर्शनम्=Model house.

**तरुणी** : कारण्डवनगरं गन्तुकामाऽहम् ।

**तरुणः** : एवम् ? मयाऽपि तत्रैव गम्यते ।

**तरुणी** : सुघटितो योगः ।[1]

**(उभावपि कंचित्कालं तूष्णीं तिष्ठतः ।)**

**तरुणः** : (**स्वगतम् ।**) नगरयानस्य नहि किमप्यागमनलक्षणम् । किं विधीयेत ? (**प्रकाशम् ।**) नैव समायातं चेन्नगरयानं, किम्प्रतिपत्तव्यमिति किमपि स्थिरीकृतं वर्त्तते भवत्या ?

**तरुणी** : किं स्थिरीकरणीयम् ? अनायाते नगरयाने किंचिदन्यद् यानं स्वीकर्तव्यम् ।

**तरुणः** : हन्त, किमप्यन्यद् यानं नैवागतम् ।

**तरुणी** : आगमिष्यति । तदपि चेन्नैवागतम्··· (**इत्यर्धोक्ते ।**)

**तरुणः** : किम्प्रतिपत्तुकामा भवती ।

**तरुणी** : (**विहस्य ।**) किमन्यत्प्रतिपत्तव्यं भवति । आवाभ्यां मिलित्वा पद्भ्यामेव गन्तव्यं तदानीम् । भगवत्प्रदत्तं पादयानन्तु वर्त्तत एव ।

**तरुणः** : (**स्वगतम् ।**) 'आवाभ्यामि'ति वक्ति ? किं मयाप्येतया सह रात्रिवेलायां पद्भ्यां स्वावासं प्रति गन्तव्यं भविष्यति ?

**तरुणी** : किमपि चिन्तयतीव भवान् । कोऽत्र चिन्ताविषयः ?

**तरुणः** : (**सावहित्थम् ।**) नाहं किमपि चिन्तयामि । सम्प्रति स्वावासं प्रति गमनमिदमेकमेव वस्तु चिन्ताया विषयः ।

**तरुणी** : एतावन्तं कालं मयाऽऽशङ्कितं यदेकाकिन्येवाहम् । न जाने, कश्चन सार्धचरः प्राप्स्यते न वेति । अथेदानीं नाम नाहमात्मान-

---

१. 'बहुत बढ़िया संयोग है' इति भाषायाम् ।

मेकाकिनीं मन्ये । भवन्तमालोक्य सर्वथाऽऽश्वसिति मे चेतः ।

**तरुणः** : अथ कारण्डवनगरे कस्यां रथ्यायां[1] भवती तिष्ठति ?[2]

**तरुणी** : 'घ'संज्ञितायां रथ्यायाम् ।

**तरुणः** : (**विस्मयं नाटयन् ।**) किमुक्तम् ? 'घ'संज्ञितायां रथ्यायामिति? हन्त, तत्रैव तु मयापि स्थीयते !

**तरुणी** : (**सानन्दम् ।**) एवं किम् ? किङ्क्रमाङ्क आवसथे भवाँस्तिष्ठति ?

**तरुणः** : ममावसथक्रमाङ्कः पञ्चपञ्चाशदुत्तरैकशतम् ।

**तरुणी** : हन्त, सुघटितो योगः ।

**तरुण** : अथ भवत्याः क आवसथक्रमाङ्कः ?

**तरुणी** : पञ्चपञ्चाशदुत्तरत्रिशतम् ।

**तरुणः** : (**सस्मितम् ।**) सुघटित एव नामायं योगः ।

**तरुणी** : अथ किमद्यात्र प्रदर्शनावलोकनायैव समागत आसीद्भवान् ?

**तरुण** : बाढम् । भवत्याः पुनः कस्मादागमनम् ?

**तरुणी** : तदर्थमेव ।

**तरुणः** : मन्ये, नैव प्रदर्शनं कात्स्न्र्येन विलोकितम्भवेत् ।

**तरुणी** : कात्स्न्र्येन विलोकनमशक्यप्रायमेकस्मिन्नेव पर्याये ।[4]

**तरुणः** : ममापि तदेव मतम् । इदं निदर्शनीयगृहाणाम्प्रदर्शनमस्मा-

---

१. 'Avenue' इत्यभिप्रेतोऽर्थः ।

२. निवसति ।

३. आवसथः=House.

४. पर्यायः='बारी' इति भाषायाम् ।

दृशानां कृतेऽप्रयोजनमेव मन्ये। मयाऽपि पारेयमुनं[1] काचिद् भूमिः क्रीता वर्त्तते वसत्यर्थम्। अद्य मयाऽनयैव बुद्ध्याऽत्र समागतं यत्किंचन गृहनिदर्शनं मदर्थमुपादेयं दृश्येत तर्हि तादृशमेव गृहमेकं मयाऽपि स्वस्यार्थे निर्मीयेतेति। परमतिमात्रं महार्घाणीमानि प्रदर्शितगृहनिदर्शनानि। कनिष्ठमप्याश्रयोपयुक्तं निदर्शनं द्विसहस्र-रूप्यकेभ्यो न्यूनमूल्यं नास्ति। यानि च सर्वथा समाश्रयणीयानि, तेषां मूल्यं तु पञ्चसहस्ररूप्यकेभ्योऽप्यधिकं विद्यते।

**तरुणी** : निदर्शनानि केवलं प्रदर्शनप्रयोजनान्येव न पुनरभ्युपगमन-प्रयोजनानि। विलोकनमात्रेणैव नेत्रविनोदोऽनुभवितव्यः। तस्मादधिकं नैव किमपि मनसा करणीयम्।

(**मुहूर्त्तं यावदुभावपि तूष्णीं तिष्ठतः।**)

**तरुण** : (**किंचित्प्रश्नसंकोचं नाटयन्।**) अन्तर्वेदप्रदेशवास्तव्येव प्रति-भात्यत्रभवती।

**तरुणी** : कथम्भवता प्रत्यभिज्ञातन्तत्?[2]

**तरुणः** : भवत्या वचनप्रवाहः[3] सर्वमप्यभिव्यनक्ति।

**तरुणी** : अपि नाम मम वचनप्रवाह इत्थमभिव्यनक्ति?

**तरुणः** : अथ किम्?[4]

**तरुणी** : अहमन्तर्वेदप्रदेशवास्तव्येति किं वाङ्मात्रेण प्रत्यभिज्ञायते?

---

१. यमुनायाः पारे।

२. How did you come to know that? इति वाक्य-तात्पर्यम्।

३. 'The way of your talking' इत्यर्थः।

४. 'Oh yes' इत्यर्थः।

**तरुणः** : अथ किम् ? (**क्षणं तूष्णीं स्थित्वा।**) अथात्रभवत्याः किं नामधेयपदम् ?

**तरुणी** : मञ्जुहासिनी।

**तरुणः** : (**क्षणं विरम्य पुनरपि।**) अत्र कुत्राप्यधीयते किम् ?

**मञ्जुहासिनी** : अध्याप्यते।

**तरुणः** : (**साश्चर्यम्।**) अध्याप्यते ? कुत्र खलु ?

**मञ्जुहासिनी** : अत्रैव करपल्लवाटके। 'सरस्वतीविहारा'ख्यायां समुन्नतमाध्यमिकपाठशालायाम्[1]।

**तरुणः** : कं विषयमध्यापयति भवती।

**मञ्जुहासिनी** : लोकभाषामध्यापयामि।

**तरुणः** : तर्हि काचिदत्युन्नता लोकभाषापरीक्षा समुत्तीर्णा भवेत्।

**मञ्जुहासिनी** : मया लोकभाषायाश्चरमा परीक्षा समुत्तीर्णा वर्त्तते।

**तरुणः** : (**साश्चर्यम्।**) हन्त, चरमा परीक्षा ? क्व कृतं तदर्थमध्ययनम् ?

**मञ्जुहासिनी** : वाराणस्याम्। तत्रत्ये वाराणसेये विश्वविद्यालये।

**तरुणः** : (**सोल्लासम्।**) नूनं प्रारब्धवत्तरा[2] भवती। (**किंचिद्विरम्य।**) स्मराम्यहमपि कोलाचलमण्डलराजधानीभूते कोलाचलपत्तने माध्यमिकपाठशालायामेव च्छात्रान्देववाणीमध्यापयिष्यामि।

**मञ्जुहासिनी** : अथ साम्प्रतमत्रेन्द्रप्रस्थपुरे किं समाचरति भवान् ?

**तरुणः** : नियुक्तकोऽस्मि। आस्थाननिकेतने कार्योपस्थापकपदे नियोगं समाचरामि।

---

१. समुन्नतमाध्यमिकपाठशाला=Higher Secondary School.

२. प्रारब्धम्=भाग्यम्। प्रारब्धवत्तरा=अधिकभाग्यशालिनी।

**मञ्जुहासिनी** : किं श्रीमतो नामधेयम् ?

**तरुण:** : मम नामधेयं नीलकण्ठः। अथ कुत्रत्योऽहमिति शक्यते वा प्रत्यभिज्ञातुम्भवत्या ?

**मञ्जुहासिनी** : अनेन नामधेयसंकीर्त्तनेन भवानपरान्तप्रदेशीय इति सम्यग्वक्तुं शक्यते।

**नीलकण्ठः** : (सस्मितम्।) कथमेकपद एव प्रत्यभिज्ञातोऽस्मि। किं मदीयो वाक्प्रवाहस्तथा सूचयति ?

**मञ्जुहासिनी** : नहि तावत्। भवदीयो वाक्प्रवाहस्तु नामास्मदीयमप्यन्तर्वेदीयवाक्प्रवाहमतिशेते साधुतायाम्। भवदीयं नामधेयपदं भवदपरान्तप्रदेशवास्तव्यत्वं सूचयति।

**नीलकण्ठः** : कथं नाम्नैव गृहीतं तथात्वं मे ?

**मञ्जुहासिनी** : बहु न्युषितमस्ति मयाऽपरान्तवास्तव्यानां कुटुम्बेषु। तस्माज्झटित्येव बोधः संवृत्तः। अस्तु। किमहं ज्ञातुमर्हामि कुत्र भवतोऽध्ययनादिकं जातमिति ?

**नीलकण्ठः** : अन्तर्वेदप्रदेश एव।

**मञ्जुहासिनी** : कुत्र खलु ?

**नीलकण्ठः** : चरणन्यासनगरप्रत्यासन्नायां मायापुर्याम्। तत्रत्य एकस्मिँल्लोकविख्याते विश्वविद्यालये।

**मञ्जुहासिनी** : (सानन्दम्।) सुघटितो योगः। चरणन्यासनगर एव मम पितृव्यो निवसति। कृत्स्नमपि बाल्यं मे तत्रैव व्यतीतम्।

**नीलकण्ठः** : बाल्यादारभ्य यावन्ति पञ्चदशवर्षाणि तत्रैव न्यवसम्। तस्मादहमप्येकेन विधिना तत्रत्य एवाऽस्मि संजातः।

**मञ्जुहासिनी :** अहमपि स्वात्मानं तत्रत्यामेव निर्दिशामि—यदि कश्चिन्मां पृच्छति ।

**नीलकण्ठः :** यदि कश्चनान्तर्वेदवास्तव्यो मां पृच्छति, तर्हि मयाप्येतदेव निर्दिश्यते । अस्तु । एतादृशी नेदीयसी भवती सर्वदृष्ट्या तर्हि कदाचिदागन्तव्यमस्मदावसथं प्रत्यपि । कारण्डवनगरस्थितो भवदावसथस्त्वस्मदावसथप्रत्यासन्न एव । वयमत्रभवतीं सत्करिष्यामः ।

**मञ्जुहासिनी :** जानामि कथमपरान्तवास्तव्या अभ्यागतान्सत्कुर्वन्तीति ।

**(अत्रान्तरे पटपटीयानयन्त्रं[1] प्रविशति ।)**

**यानयान्त्रिकः[2] :** **(सोच्चैःस्वरम् ।)** कारण्डवनगरमागम्यतां कारण्डवनगरम् ! **(कुत्रापि निलीय स्थिताः पंचषा[3] जना यानयन्त्रसमीपमागच्छन्ति ।)**

**प्रथमः :** कियद् गृह्यते ?

**यानयान्त्रिकः :** कुत्र यास्यते ?

**प्रथमः :** कारण्डवनगरं यास्यते ।

**यानयान्त्रिकः :** दश आणका भवेयुः ।

**द्वितीयः :** दश आणकाः ? नगरयानन्तु नामाणकचतुष्टयं गृह्णाति ।

**यानयान्त्रिकः :** तर्हि तेनैव यानेन गम्यताम् ।

---

१. पटपटीयानयन्त्रम्='फटफटी' इति भाषायाम् । 'Auto-Rickshaw' इति यावत् ।

२. Auto-Rickshaw driver.

३. A few persons i. e. five or six in number इत्यर्थः ।

**तृतीयः** : अथ धृतराष्ट्रनगरमपि यास्यति किमिदं यानयन्त्रम् ?

**यानयान्त्रिकः** : यास्यत्यास्यताम् ।

**तृतीयः** : कत्याणका भविष्यन्ति ?

**यानयान्त्रिकः** : धृतराष्ट्रनगरस्य नवाणका भविष्यन्ति ।

**तृतीयः** : नवाणकास्तु गुर्वी मात्रा । किंचिन्न्यूनं गृह्यताम् ।

**चतुर्थः** : षडाणकाः प्रदास्यन्ते कारण्डवनगरस्य । यास्यसि ?

**यानयान्त्रिकः** : नैव-नैव । न्यूनं दशाणकेभ्यो नैव ग्रहीष्यते ।

**प्रथमद्वितीयौ** : अयन्तावदतिरेकः । अग्रतः पृष्ठतश्च सम्यग्विचार्य वचनम्प्रयोक्तव्यम् ।

**यानयान्त्रिकः** : सुविचार्यैव प्रयुज्यते । अथेदानीं रात्रेः कति वादिताानीति ज्ञायते किम् ? इदम्पादोनमेकादशवादनम् । कोऽस्मिन्कालेऽल्पतरं गृह्णीयात् ? परस्ताच्च, कारण्डवनगरं गत्वा रिक्तमेव प्रत्यागन्तव्यम्भवति । तदा व्ययितस्य यन्त्रतैलस्यावक्रयं को दास्यति ?

**पञ्चमः** : गृहाण भोः, अष्टाणकान् । प्रापय मां सत्वरं कारण्डवनगरम् ।

**यानयान्त्रिकः** : नैव श्रीमन् । दशाणकान् गृह्णामि ।

**नीलकण्ठः** : (**मञ्जुहासिनीमुद्दिश्य।**) साधु वक्त्येष अष्टाणका इति ।

**मञ्जुहासिनी** : आम् । अष्टाणका एव सन्तु । अस्यां वेलायां गृहगमनं मुख्यम् । आणकाः केन विचीयन्ते ? तदनुरुध्यतामेष आणकाष्टकार्थम् ।

**नीलकण्ठः** : (**यानयान्त्रिकमुद्दिश्य।**) आणकाष्टकप्रदायिनो वयं त्रयः संजाताः । अथाणकद्वयस्य कः प्रश्नः । नयास्मान् । माऽत्र वस्तुनि

विमर्शातिशयं कार्षीः ।

**यानयान्त्रिकः** : (किंचिद्विचिन्त्य ।) तथैवास्तु । आगम्यताम् ।

(मञ्जुहासिनीनीलकण्ठौ यानयन्त्रस्याग्रभागस्थ आसन उपविशतः । अपरावपि द्वौ यात्रिणौ पृष्ठभागस्थ आसन उपविशतः ।)

**यानयान्त्रिकः** : सर्वे सम्यगुपविष्टाः ?

**सर्वे** : हुम् । चालय यानयन्त्रम् ।

**यानयान्त्रिकः** : एष चालयामि ।

(इति सघोरपटपटास्वनं सतैलधूमोद्वमनं च पटपटीयानयन्त्रं प्रस्थानं नाटयति ।)

(निष्क्रान्ताः सर्वे ।)

इति सप्तमः संवादः ।

अष्टमः संवादः ।

# आश्रमसग्धिः[1] ।

१. सग्धिः=सहभोजनम् । 'सपीतिः स्त्री तुल्यपानं सग्धिः स्त्री सहभोजनम्' इत्यमरः । [सपीतिः=Tea Party; सग्धिः=Dinner Party.]

## प्रथमं दृश्यम् ।

(नेपथ्ये ।)

दुःखध्वंसं ये जनाः कामयन्ते,
येषां चित्तं निर्वृतिं नोपयातम्,
तेषां—तेषामस्तु नूनं शरण्यो
ह्याचार्याणां शेखरो लुप्तघोणः ।

(त्रिकृत्वो डमरुध्वनिः श्रूयते ।)

हेयं कृत्यं यज्ञयागादिकानाम्;
हेयः सर्वोऽप्यत्र तत्त्वार्थवादः ;
हेया विद्या धर्मकर्मोपदेष्ट्री;
सन्धेयोऽयं केवलं लुप्तघोणः ।

(षट्कृत्वो डमरुध्वनिः श्रूयते ।)

विज्ञानानामेकविज्ञानभूमिः ;
गन्तव्यानां वर्त्मनां मुख्यवर्त्म;
सेव्यार्थानां सर्वसेव्यातिशायी
तेजोगोलः कोऽप्ययं लुप्तघोणः ।

(नवकृत्वो डमरुध्वनिः श्रूयते ।)

(ततः प्रविशन्ति त्रयः शिष्याः।)

**प्रथमः शिष्यः** : हन्त भोः, अद्य तावत्पञ्चसंख्याका अपि जना अस्मदाचार्यपादान् शरणं नैव प्रपन्नाः। को नामास्यास्मदीयाश्रमस्य निर्वाहोपायः स्यात् ?

**द्वितीयः शिष्यः** : केवलमस्मदाचार्यस्य गुणगौरवप्रख्यापनेनैव कार्यसिद्धिर्नैव सम्भाव्यते। लोकानां किम्प्रियं किञ्चाप्रियमिति सुनिपुणं निश्चित्य प्रियवस्तुसम्भरणमार्गोऽप्रियवस्तुहानमार्गश्चावलम्ब्यः। एतेनैव लोकानां मनांसि समाकृष्टानि स्युः। तस्मादेतादृशः कश्चनोपायश्चिन्त्यताम्।

**तृतीयः शिष्यः** : नूनं लोको ह्ययं मनोरञ्जनरुचिः। तदत्र मनोरञ्जनकरवस्तुसम्भरणस्यास्ति किं कश्चनोपायः ?

**प्रथमः शिष्यः** : कानि तानि मनोरञ्जनकरवस्तूनि ?

**तृतीयः शिष्यः** : मनोरञ्जनकरवस्तूनामियत्ता नास्ति। तथापि लोकमनःसमाकर्षणाय लोकसङ्गीतं, लोकनृत्यं, कथाचित्रप्रदर्शनञ्च त्वरितफलप्रदायि।

**प्रथमः शिष्यः** : त्रयमप्येतदत्यसुलभं नः।

**द्वितीयः शिष्यः** : नूनमसुलभम्। तद्धिदं संग्रहणे महद्भाण्डबलमपेक्ष्यते[1]। तद्भाण्डबलं कुतः सम्भ्रियेत ?

**प्रथमः शिष्यः** : स एव तावत्प्रश्नः। सर्वारम्भास्तण्डुलप्रस्थमूलाः। अथ 'तण्डुलप्रस्थस्यैव'[2] संग्रहणं दुःखम्। (**विचिन्त्य।**) अथास्मिन्

---

१. भाण्डबलम्='पूँजी' इत्यभिप्रेतोऽर्थः।

२. अस्याऽपि 'पूँजी' इत्येव प्रासंगिकोऽभिप्रेतोऽर्थः।

चक्रवाकपुरे नहि कोऽपीदृशो दाक्षिण्यशीलः सङ्गीतविशारदो, यो हि विना पारिश्रमिकं स्वकौशलप्रदर्शनाय प्रसन्नो भवति ?

**द्वितीयः शिष्यः** : एतस्मिंश्चक्रवाकपुरे तु सर्वथा दुर्लभः । एकस्या होरायाः षष्टिः सुवर्णमुद्रा गृह्णन्तीमे । अथ होरात्रयञ्च कनिष्ठः सङ्गीतानुष्ठानकालः । ततोऽल्पो नैव केनाऽपि सङ्गीतविदाऽनुष्ठानाय स्वीक्रियते । एवं सति कः खल्वशीत्यूर्ध्वमेकशतं सुवर्णमुद्राः प्रबध्नीयात् ?

**तृतीयः शिष्यः** : तत्र विधीयतां कश्चिद्यत्नः । एवं कार्यारम्भ एव हस्तपादौ विशिथिलय्यावस्थानं नोचितम् । कथमेवं स्थितेन चिकीर्षितप्रतिपत्तिः स्यात् ?

**प्रथमः शिष्यः** : तर्हि त्वमेव प्रबोधय किञ्चित्करणीयजातमस्मिन्वस्तुनि ।

**तृतीयः शिष्यः** : आदौ तावत्सङ्गीतनृत्यविशारदाः समक्षं द्रष्टव्याः प्रष्टव्याश्च कथं तेषां चित्तप्रसादः स्यादिति ।

**द्वितीयः शिष्यः** : युज्यते । तथैव विधीयताम् । नूनम्प्रयतनात्प्रागेव तेषां दौर्लभ्यकल्पनमश्रेयः ।

**(ततः प्रविशत्यष्टावक्रकल्पः परमतेजस्वी लुप्तघोणाचार्यः ।)**

**लुप्तघोणाचार्यः** : **(शिष्यानुद्दिश्य ।)** किं मन्त्र्यते ।

**सर्वे शिष्याः** : **(ससम्भ्रममुत्थानं नाटयित्वा ।)** प्रणम्यन्त आचार्यपादाः । न विशिष्टं किञ्चित् । येन विधिना जनाः श्रीमत्पादमूलम्प्रपन्नाः स्युः, स विधिर्मृग्यते ।

**लुप्तघोणाचार्यः** : बालाः, कस्मादयम्प्रपंचः ?

**प्रथमः शिष्यः** : यस्मादस्मदाश्रमोऽयमनुदिनम्पुष्पफलवैभवश्रिया पुष्टिमनुभवतु ।

**लुप्तघोणाचार्यः** : (स्मयमानवदनः सन् ।) किम् चेष्टितम् ?

**प्रथमः शिष्यः** : अत्रभवत्प्रशस्तिपरास्त्रयः श्लोका अस्माभिर्निर्मिताः । ते नगरस्यैतस्य प्रतिश्शृङ्गाटकं गत्वा समुदितस्वरेणोच्चैर्गीयन्ते डमरुश्च निनाद्यते ।

**लुप्तघोणाचार्यः** : के श्लोकास्ते ?

**शिष्याः** : ('दुखध्वंसमि'ति श्लोकत्रयं पुनः पठन्ति ।)

**लुप्तघोणाचार्यः** : नूनं रासभकल्पा यूयम् । केन मन्त्रितं यद्युष्माभिरीदृशि व्यापारपङ्के पादा निक्षिप्य मलीमसीक्रियेरन्निति ।

**सर्वे शिष्याः** : (सभयं मौनमाश्रित्य तिष्ठन्ति ।)

**लुप्तघोणाचार्यः** : नायं युष्मदीयो व्यापारः । आश्रमस्य चिन्ता मम कार्यभूमिर्न पुनर्युष्माकम् ।

**तृतीयः शिष्यः** : अद्य पर्यन्तं नैव केनापि किंचित्कृतम् ।

**लुप्तघोणाचार्यः** : (निवार्य ।) अलं चर्वितव्येन[1] । सर्वत्र युष्मान्विज्ञाप्यैव कार्याणि कर्त्तव्यानीति नास्ति कल्पः ।

**द्वितीयः शिष्यः** : अस्माभिरपि यच्चिन्तितं, तन्नाश्रेयसे ।

**लुप्तघोणाचार्यः** : युष्माभिः किमप्यस्तु चिन्तितम् । अत्राश्रमे मच्चिन्तितमेव प्रभवति ।

**प्रथमः शिष्यः** : बाढमाचार्यपादाः । भवच्चिन्तितमेव सर्वदा प्रभवति । नात्र सन्दिह्यते ।

---

१. 'कृतं वृथा रटितेने'ति प्रासङ्गिकं तात्पर्यमेतस्य वाक्यस्य ।

**लुप्तघोणाचार्यः** : तर्हि कस्मादियं कार्यमन्त्रणा ?

**प्रथमः शिष्यः** : लोकचित्तानुकर्षणार्थमस्मादृशैरपि बालबुद्धिभिः किंचिदाविष्कर्तुं शक्यते न वेति परिज्ञानार्थमासीत्सा ।

(**नेपथ्ये ।**)

भोः, भोः, आश्रमवास्तव्याः, अपि दृष्टः कुत्राऽपि लुप्तघोणाचार्यः ?

**लुप्तघोणाचार्यः** : (**स्वगतम् ।**) आः, वयस्यो मे कृपीटकुण्डलको मामन्विष्यति । (**प्रकाशम् ।**) बालाः, लोकचित्तानुकर्षणशास्त्रपरमपारदृश्वा एष मे सुहृदित एवाभिवर्त्तते । यावदपि युष्मत्समीहितं स्वयमेव सम्प्रतिपन्नमित्यवगम्यताम् ।

(**ततः प्रविशति कृपीटकुण्डलकाचार्यः ।**)

**कृपीटकुण्डलकाचार्यः** : (**स्वगतम् ।**) एष लुप्तघोणः शिष्यत्रयेण परिवारितः किमत्र कर्त्तुमनास्तिष्ठति ? महानेष शास्त्रार्थप्रतिपत्तिवित् । लोकोत्तरम्ब्रह्मवर्चसम्पुष्णन्कथमेष देदीप्यमानमाकाशनक्षत्रमिव राजते स्वविद्याप्रकर्षशोभिना नेत्राभिरामदर्शनेन वपुषा ! अष्टावक्रकल्पगात्रोऽपि सन् लोकविलक्षणेन ब्रह्मवर्चःप्रकाशेन जगतीगतानभिरमणीयरूपकान्तीनप्यतिशेते । महन्मे सौभाग्यफलं यदेतादृशो मे वयस्यः ।

**लुप्तघोणाचार्यः** : एहि भोः, कस्मान्नगरादद्य ते समागमनम् ? चिराद्विलोकितोऽसि । एहि । इदं काष्ठासनम् । उपविश ।

**कृपीटकुण्डलकाचार्यः** : (**पुरस्कृते काष्ठासने समुपविश्य ।**) किमद्य रे, लुप्तघोण, त्वमत्रैवोपविष्टः ? किम्मन्त्र्यते ? का प्रवृत्तिस्तवाश्रमस्य ? किमिदानीम्प्रवर्त्तते ? कथङ्कारमात्मानं कलयसि ?

**लुप्तघोणाचार्यः** : सर्वथा कुशलिनं कलयामि । त्वदीया का प्रवृत्तिः ? कथमद्य प्रभ्रष्टक इवागतोऽस्यस्मदीयमाश्रमम्प्रति ?

**कृपीटकुण्डलकाचार्यः** : नाहम्प्रभ्रष्टकः । प्रयोजनं बलवदेकं मनस्याधाय समागतोऽस्मि ।

**लुप्तघोणाचार्यः** : (विहस्य ।) आः, त्वदीयमपि प्रयोजनं किञ्चिद् भवितुमर्हति ? स्वेच्छया दिग्दिगन्तसञ्चारपरायणस्य तव किं कारणम्प्रयोजनेन ? वरम् । ब्रूहि, सम्प्रति कस्मान्नगराद् द्वीपाद् वा समागच्छसि ?

**कृपीटकुण्डलकाचार्यः** : साम्प्रतं नाहं दिगन्तसञ्चारीति प्रथमं निवेद्यते ।

**लुप्तघोणाचार्यः** : न त्वं दिगन्तसञ्चारी ? किम्ब्रूषे ? किन्त्वयाऽपि कस्मिश्चित्कुलक्करे[1] बद्धं स्वकीयं लांगूलम् ? एतत्प्रथममेव[2] नूतनमिमं व्यतिकरं शृणोमि ।

**कृपीटकुण्डलकाचार्यः** : (विहस्य ।) बद्धं लांगूलम् ।

**लुप्तघोणाचार्यः** : अये, परं कस्मिन्कुलक्करे ?

**कृपीटकुण्डलकाचार्यः** : यथा त्वयैष आश्रमाख्यः कुलक्करः समाश्रितस्तथैव मयाऽपि कश्चनैतदूर्ध्वं[3] समाश्रयिष्यते ।

**लुप्तघोणाचार्यः** : तत्त्वयाऽप्याश्रमः स्थापितः ?

**प्रथमः शिष्यः** : आचार्यपादाः, तत्राश्रमे किं-किं प्रवर्त्तत इति श्रोतुकामा वयम् ।

---

१. 'खूंटा' इत्यस्मिन्नर्थे क्वापि श्रुतोऽयं 'कुलक्कर'शब्दः ।

२. एतत्प्रथममेव=एष प्रथम एवावसरो यदा । 'पहली ही बार' इति भाषायाम् ।

एतदूर्ध्वम्=आगामिनि काले । 'आगे चलकर' इति लोकभाषायाम् ।

**द्वितीयः शिष्यः** : किं स्वरूपं तस्याश्रमस्येति ज्ञातुमिच्छामः ।

**लुप्तघोणाचार्यः** : बालाः, तूष्णीं तिष्ठत । नोभयोर्मध्ये तृतीयेन स्वकीयश्चञ्चुः प्रवेशयितव्यः ।[1]

**कृपीटकुण्डलकाचार्यः** : लुप्तघोण, किमर्थमेते शिष्या निवार्यन्ते प्रश्नाचारात्? क्रियन्तां नाम प्रश्नाः । अहमुद्यतोऽस्मि प्रतिवचनार्थम् । तथापि शृणु मेऽत्रागमनप्रयोजनम् । अद्यैवाहं नक्तमङ्गलाख्यात्पत्तनादाकाशवर्त्मना समायातोऽस्मि भवतः सर्वानप्याकाशवर्त्मना तत्रैव नेतुम् । ततश्चाग्रे दाक्षिणात्ये जनपदे । आकाशयानस्य नाम त्वनेकक्तृत्वः श्रुतम्भवेदेभिर्भवच्छिष्यैः । परम् आकाशवर्त्मना प्रवासस्य कीदृश आनन्दः स नैवानुभूतो भवेत् । तदद्य तमेवैतेषाम्प्रतिपादनार्थमिहागतोऽस्मि । अथ त्वयापि कदाचिदाकाशयानेन प्रवासः कृतोऽस्ति किम्?

**सर्वे शिष्याः** : (**सहर्षातिरेकम् ।**) अम्मोऽऽ, आकाशवर्त्मना प्रवासः? अवश्यमवश्यमाचार्यपादाः—अवश्यम् । नैव कदाप्यस्माभिरेष प्रवासानन्दोऽनुभूतः । अवश्यमायास्यामः । अवश्यमायास्यामः ।

**लुप्तघोणाचार्यः** : कृपीटकुण्डलक, अपि भूतार्थम्ब्रवीष्युत प्रहास एव सर्वः?

**कृपीटकुण्डलकाचार्यः** : नायं प्रहासः । परमार्थत एव ब्रवीमि । तत्सर्वं मदीयमत्रागमनप्रयोजनं विस्तरेण शृणु ।

**लुप्तघोणाचार्यः** : अवहितोऽस्मि ।

**शिष्याः** : अवहिताः स्मः ।

---

१. 'जब दो बात कर रहे हों, तब तीसरे को बीच में नहीं आना चाहिये' इति वाक्याभिप्रायः ।

कपोटकुण्डलकाचार्यः : अस्ति दाक्षिणात्ये जनपदे रत्नकाञ्चनपुराख्यं नगरम् । तत्रैको हिरण्यकङ्कणाख्यः श्रेष्ठी प्रतिवसति । तस्य प्रभूतं स्वापतेयमस्ति । सत्स्वप्यनेकेषु रत्ननिचयेषु नासौ सविशेषरूपलावण्यवत्यामपि भार्यायां बहूनि संवत्सराणि यावत्पुत्ररत्नाख्यं रत्नं लेभे । अथानेकेषु देवताराधनार्चनादिकेषूपचारेषु समाचारितेषु तस्य भार्या महताऽऽयासेन पुत्रमेकं जनयित्वा तत्समनन्तरमेव दिवं गता । स पुत्रोऽपि कैश्चिदेवाहोभिर्गतासुः सञ्जातः । तस्मादतिमात्रं निर्विण्णहृदयः सन् स एकदा मनस्येवं व्यचिन्तयत् —'पुत्रकलत्रहीनस्य मम किमस्ति प्रयोजनमेतेन प्रभूतेन स्वापतेयसञ्चयेन ? तत्कस्मैचिदपि लोकसंग्रहव्यापारानुषक्तचित्ताय[1] महात्मने सर्वमिदं स्वापतेयं दत्त्वा किमप्यरण्यपदमेव समाश्रयामीति ।' एवं चिन्तयित्वा स श्रेष्ठी तस्मिन् रत्नकाञ्चनपुर एवमुद्घोषितवान्—'यः कोऽपि लोकसंग्रहकर्मणि निवेशितकृत्स्नायुष्को धनादित्सुः मत्सकाशमागत्य स्वलोकसंग्रहकार्यमाविष्कृत्य मम मनस्तोषं जनयिष्यति, तस्याहं सर्वमपि मे स्वापतेयम्प्रतिपादयिष्यामी'ति । परं तत्र रत्नकाञ्चनपुरे सर्वेषामपि तत्पुरवासिनां तादृशं वित्तसौभिक्ष्यं यन्नैव कोऽपि तस्य पार्श्वे धनप्रार्थनायै गच्छति ।

अथैकदा देशाद्देशान्तरं पर्यटन्नहं यदृच्छयैव तत्र सम्प्राप्तः । मामवलोक्य च तत्पुरवासिनो भृशं तुतुषुः । तत्र सर्वेऽपि दातार एव; नहि कोऽपि भिक्षुः । प्रथममेव भिक्षुकल्पमागच्छन्तं मां विलोक्य ते सर्वे तथा प्रसेदुर्यत्कश्चन मां स्वगृह-

---

१. 'प्रजाकल्याणकर्मणि संलग्नमनस्काये'ति पर्यायार्थः ।

माहूय पाद्येनार्घ्येण च प्रतिपूजयति; कश्चन सुखोष्णेन जलेन मां बहुमूल्यसुगन्धिद्रव्योद्वर्त्तनैरभ्यङ्ग्य स्नपयति; कश्चन मां नानाविधैर्देवदुर्लभैः पक्वान्नविशेषैः सम्मानयति; कश्चन मामनेकरत्नालङ्कारप्रदानेनानुगृह्णाति; कश्चन च महार्हं शयनीयमास्तीर्य संवेशकाले स्वगृहपरिचारिकाभिर्मम गात्रसंवाहनं कारयति। एतादृशान्नानाविधानुपभोगान्त्स्वीकुर्वन्नहमेकदा हिरण्यकङ्कणस्य गृहं सम्प्राप्तः। स च श्रेष्ठी सुरेन्द्रभवनेष्वपि दुर्लभैरुपचारैर्मां सम्यक्प्रतिपूज्य प्रोवाच—'भो महात्मन्, कस्माद्देशादत्रागतोऽसि; किम्प्रयोजनं मनसि कृत्वाऽस्मदीयं देशमिममलंकृतवानसी'ति। मयोक्तम्—'भोः श्रेष्ठिन्, अनेकदेशसंचारेण स्वकीयं लोकदिदृक्षाकुतूहलं शमयितुमेवेयमटाट्या मया स्वीकृता।' स पृष्टवान्—'विहितानेकदेशसंचारो भवान्। अथ धनप्रदानाय कश्चन योग्यतया सर्वातिशायी लक्षितश्चेदस्मिन्भूमण्डले तस्य नाम निर्दिशतु। अहं कृत्स्नमपि मदीयं धनं तस्मै दत्त्वा हिमवन्तं नगाधिपं निवासार्थमाश्रयेयम्।' मयोक्तम्—'अवश्यं निर्दिशामि। ममैव मित्रमेको लुप्तघोणाचार्याख्यश्चक्रवाकपुरे निवसति। सो हि विद्वत्तया, वाग्वैशारद्येन, सौमनस्येन व्यवहारलाघवेन च सर्वानपि भूतलस्थान्मानवानतिशेते। तस्मै भवता धनम्प्रदातव्यमि'ति।

ततो मद्वचनं श्रुत्वा परामानन्दस्य कोटिमनुप्राप्तः स मामादिदेश—'भोः महात्मन्, यद्येवं तर्हि द्रागेव स भवन्मित्रमत्रानीयताम्। गमनविलम्बम्परिहातुं भवानाकाशयानमारुह्याकाशवर्त्मना गच्छत्वानयतु च तं महात्मानं तेनैव वर्त्मना' इति।

तदेवं त्वां तस्य श्रेष्ठिनः सकाशमाकाशवर्त्मना नेतुमेवास्मि

समागतः । तद्रत्नकाञ्चनपुरमेव सर्वैरप्येभिः शिष्यैः समवेतः प्रयातुं सज्जो भव ।

**लुप्तघोणाचार्यः** : (सस्मितम् ।) तदयमेव किं स कुलक्करः ?

**कपीटकुण्डलकाचार्यः** : अथ किम् ? अस्तु । त्वर्यतामनन्तरकरणीयार्थम् ।

(सर्वे सुप्रसन्नवदना निष्क्रान्ताः ।)

इत्यष्टमे संवादे प्रथमं दृश्यम् ।

## द्वितीयं दृश्यम् ।

(ततः प्रविशत आश्रमभृत्यौ कदम्बकप्रियपुष्पकौ ।)

**कदम्बकः** : अये प्रियपुष्पक, अप्याकर्णितमद्य त्वया किञ्चित् ?

**प्रियपुष्पकः** : नैव किमपि ।

**कदम्बकः** : किं सर्वथा शयानेनैव त्वयाऽऽश्रमेऽस्मिन्कार्यं क्रियते ?

**प्रियपुष्पकः** : आदिष्टकार्यनिर्वर्त्तनमात्रेणैव प्रयोजनमस्मदीयम् । किं कार्यान्तरेण श्रुतेन वा परिचिन्तितेन वा ?

**कदम्बकः** : किमादिष्टोऽसि ?

**प्रियपुष्पकः** : आदिष्टोऽस्मि यदद्याश्रमशाकशाकटात्[१] प्रत्यग्रस्थूलपुष्पगोजिह्वाः, ग्रन्थगोजिह्वाः[२], पत्रगोजिह्वाः[३], प्रपक्वताम्रभण्टाकीफलानि[४], वृन्ताकानि[५], पुस्तकशिम्बिकाः[६],

---

१. 'कोइडार (सब्जियों के खेत) से' इति भाषायाम् ।

२. ग्रन्थगोजिह्वा=गांठगोभी ।

३. पत्रगोजिह्वा=पत्तागोभी । करमकल्ला ।

४. ताम्रभण्टाकीफलम्=टमाटर ।

५. वृन्ताकम्=बैंगन ।

६. पुस्तकशिम्बिका=सेम ।

पर्यङ्कपट्टिकाः[१] , हरेणुकाः[२] , गृञ्जनानि[३] , वीरसेनकानि[४] चावचेतव्यानीति ।

**कदम्बकः** : कस्मादेष आदेश इति जानासि ? अद्य सूपशालायां कश्चन विशेषः पाकारम्भः श्रूयते । कश्चन महानुभावोऽभ्यागत आश्रममेतम्प्रतिपन्नोऽस्तीति । तत्सत्क्रियार्थमेवैष उद्यमः ।

**प्रियपुष्पकः** : महानुभावेषु प्रतिपन्नेषु शाकपत्राहरणं कस्मादादिश्यते ? कस्मान्न कूपकुलीरकाः, कूपदर्दुराः, कूपकच्छपाश्चादिश्यन्ते । एतेषाम्पललेन तथा मिश्रीकृतः सूपः प्रतिपद्येत यथाऽभ्यागतो जन्मान्तरेऽपि तदास्वादं नैव विस्मर्तुं शक्नुयात् ।

**कदम्बकः** : अये, नायं महाभागः पललपिण्डरुचिः । कश्चन पुराणश्रोत्रियम्मन्यः श्रीमतां लुप्तघोणाचार्याणां गुरुकुलसहाध्यायीति श्रूयते । तस्मादेव वीतरसानि शाकपत्राणि सञ्चीयन्ते ।

**प्रियपुष्पकः** : कदम्बक, भाग्येनैव तावत्कदाचिदत्राश्रमपदे बाह्यकानामभ्यागतानां सम्पातो[५] भवति । तदैव सूपशालायां केचन विशेषा आरम्भाः प्रादुर्भवन्ति । तदेतस्मिन्नवसरेऽपि प्रात्यह्निका[६] एव शुष्काः पाकप्रकाराः प्रतिपद्येरँस्तर्हि को लाभ एतेषाम्बाह्यकानामायानेन ?

---

१. पर्यङ्कपट्टिका=बड़ी सेम ।

२. हरेणुकः=मटर ।

३. गृञ्जनम्=गाजर ।

४. वीरसेनकम्=आलू ।

५. 'सम्पात' इति 'चरणसम्पातस्य' संक्षेपः । आगमनमित्यभिप्रायः ।

६. प्रात्यह्निकाः='हर रोज के' इति लोकभाषा । प्रत्यहं क्रियमाणा इत्यर्थः ।

**कदम्बकः :** नहि कश्चनापि । अहमप्यादिष्टोऽस्मि यत्सर्वेषामप्याश्रमवासिनां शिष्याणामुपस्तरणापिधानानि पृथक्पृथक्पिण्डीकृत्य वरत्राभिः[1] प्रतिबध्य च यात्रायै सज्जीकरणीयानीति । अद्य मध्याह्ने सपादद्वादशवादनवेलायां पुष्परथमारुह्य[2] सर्वैरपि शिष्यैः समवेता लुप्तघोणाचार्यपादा आकाशयानप्रस्थानकं[3] प्रति यास्यन्तीति । तस्मात्तत्पूर्वमेव मया सर्वोऽपि प्रस्थानप्रबन्धो विधातव्यः । तत्त्वं यथानिर्दिष्टं स्थलं गच्छ । अहमपि स्वकार्याभियोगाय शिष्याणां वसतिनिलयम्प्रति गच्छामि ।

**(उभावपि निष्क्रान्तौ ।)**

इति विष्कम्भकः ।

**(ततः प्रविशति पौरोगवः[4] अन्ये आरालिकाश्च[6] ।)**

**पौरोगवः : (स्वगतम् ।)** प्रियपुष्पकस्तु प्रेषितः शाकाहरणार्थम् । अथ शष्कुलिकापूरिकादिनिर्माणायापि[7] प्रबन्धो विधीयताम् । तत्रायमुद्दालको निपुणः शष्कुलिकापूरिकाकटाहने[8] । स एवा-

---

१. रज्जुभिरित्यर्थः ।

२. पुष्परथः='कार' इत्यांग्लभाषायाम् ।

३. 'हवाई अड्डा' इति लोकभाषायाम् ।

४. वसतिनिलयः='होस्टल' इत्यांग्लभाषायाम् ।

५. सूपशालाध्यक्षः ।

६. सूदाः । पाचका इति यावत् ।

७. शष्कुलिका='पूरी' इति भाषायाम् । पूरिका='कचौड़ी' इति भाषायाम् ।

८. कटाहनं तलनम् । कटाहे प्रभूतं तैलं निक्षिप्य प्रतप्ते च तस्मिन् शष्कुलिकादिभर्जनम् ।

स्मिन्कर्मणि नियुज्यताम्। लेह्याया[1] राज्यक्तायाश्च[2] निर्माणायापि कश्चन प्रेरयितव्यः। कः प्रेर्यताम् ? तत्रैष कुम्भखादनः प्रेरितः समीचीनो भवेत्। इतरत्तु तापहर्यादिकं[3] परमान्नादिकं[4] मयैव साधयिष्यते। तदिमावाकारयामि। (**प्रकाशम्।**) भोः, उद्दालककुम्भखादनौ, इत आयातम्।

**उद्दालककुम्भखादनौ** : (**उपसृत्य।**) आगतौ। क आदेशः ?

**पौरोगवः** : (**उद्दालकमुद्दिश्य।**) उद्दालक, शष्कुलिकाः पूरिकाश्च कटाहनीयाः सन्ति। तत्रावश्यकं सर्वमपि सामग्रीजातं कोष्ठागारे वर्त्तते किम् ?

**उद्दालकः** : पर्याप्तं वर्त्तते।

**पौरोगवः** : तर्हि त्वं तस्मिन्कर्मण्यभियुज्यस्व। (**कुम्भखादनमुद्दिश्य।**) अथ कुम्भखादन, त्वया लेह्या राज्यक्ता च निष्पादनीया। अलाब्वादिकं[5] दध्यादिकं च वर्त्तते न वेति दृष्ट्वा द्रागेवाहं सूचनीयः।

**कुम्भखादनः** : तत्सर्वं विद्यते। अहमिदानीमेवात्मानं तत्र कर्मण्यभियोक्ष्ये।

**पौरोगवः** : साधु-साधु। अहमप्यात्मकर्मण्यभियुज्ये।

(**ततः प्रवशन्ति त्रयोऽपि शिष्याः।**)

**प्रथमः शिष्यः** : कस्मिन्कर्मण्यभियोगः ?

---

१. 'चटनी' इति भाषायाम्।

२. राज्यक्ता=रायता।

३. तापहरी='ताहरी' इति भाषायाम्। 'ब्राह्मणी पुलाव' इति मराठीभाषायाम्।

४. परमान्नम्=पायसम्। 'खीर' इति भाषायाम्।

५. अलाबूः='घिया' इति लोकभाषायाम्।

प
रोगवः : तस्मिन्नेव यस्मिन्नभियोगायाचार्यपादैरादिष्टोऽस्मि ।

द्वितीयः शिष्यः : वयमपि भवतः साहाय्यं कर्त्तुमिच्छामः । किञ्चिदस्मदर्थमपि कार्यजातमुपदेष्टव्यम् ।

तृतीयः शिष्यः : अथाद्य द्रागेव सर्वमपि पाकादिकं निष्पाद्यमस्तीति वयमपि पाकसिद्धौ सहाया भवितुमुत्सहामहे ।

पौरोगवः : शोभनम् । भवद्भिः सहायभूतैः कार्यं त्वरितम्भविष्यति । (साकूतम् ।) परमद्य तु महानेष कार्योत्साहो भवताम् । अन्यस्मिन्समये तु क्रियासमभिहारेणाभ्यर्थिता अपि भवन्तः साहाय्यार्थं नैवोत्सहन्ते । नूनं कश्चन प्रियतरोदन्तः स्यात् ।

सर्वे शिष्याः : सर्वथा । अद्यास्माभिराकाशवर्त्मना दाक्षिणात्ये देशे रत्नकाञ्चनपुरम्प्रति यात्रा करणीया वर्त्तते ।

पौरोगवः : आः, एतस्मादेवैतावान्कार्योत्साहातिरेकः । अस्तु तर्हि । स्थीयतामत्रैव । प्रियपुष्पको यदा शाकशाकटाच्छाकान्याहरिष्यति तदा तेषां प्रक्षालने, दारणे, खण्डने च भवतां साहाय्यं भविष्यति । अथ एतदुच्यतां को भवतां यात्राक्रमः परिनिष्ठितः ?

प्रथमः शिष्यः : सपादद्वादशवादनवेलायाम्पुष्परथमारुह्य चक्रवाकपुरस्य प्रधानमाकाशयानप्रस्थानकं गमिष्यामः ।

पौरोगवः : ततस्ततः ?

द्वितीयः शिष्यः : ततः सार्द्धैकवादनवेलायां 'गालवकम्बु'नगरादागतमाकाशयानमेकं चक्रवाकपुरप्रस्थानके भुवं स्प्रक्ष्यति । त्रिंशन्निमेषाँस्तत्र विश्रम्य तदेव यानमस्मान्गृहीत्वा 'नक्तमङ्गला'ख्यं पत्तनम्प्रति प्रस्थास्यति । इयं यात्रा पञ्चहोराप्रमाणा भविष्यतीति श्रूयते । सायन्तनं भोजनादिकं सर्वमस्माभिस्तत्रैव कर्त्तव्यं

भविष्यति । होरात्रयं यावत्तत्रैव नक्तमङ्गलपत्तनप्रस्थानक-विश्रामशालायामेव विश्रान्तिः कार्या स्यात् । तदनन्तरं श्रूयते यद् 'डिण्डीरकुट्टिमा'ख्यान्नगरादागत्यैकं बृहदाकाशयानं नक्त-मङ्गलपत्तनप्रस्थानके भुवं स्प्रक्ष्यतीति । अथ रात्रौ दशवादनवेलायां तस्मात्पत्तनान्निष्क्रान्तास्तद्यानमारुह्य केवलं चतसृभिरेव होरा-भिर्वयं रत्नकाञ्चनपुरम्प्राप्स्याम इत्याकाशवर्त्मयात्राक्रमः ।

**पौरोगवः** : अथाकाशयानेन प्रवासार्थमावश्यकानि यात्रापत्राणि गृही-तानि किम् ?

**तृतीयः शिष्यः** : तेषाम्प्रवृत्तिं नैव जानीमः। तस्मिन्विषयेऽशेषमपि करणी-यजातमस्मदाचार्यपादानां मित्रं श्रीमन्तः कृपीटकुण्डलकाचार्यपादाः स्वयमेव सम्पादयिष्यन्ति । तत्रास्माभिर्नास्ति चिन्ता कर्त्तव्या ।

**पौरोगवः** : किं नाम गृहीतं—'कृपीटकुण्डलकाचार्य' इति ? एष महाभागस्त्वेतत्पूर्वमप्यनेकक्कत्वो मया दृष्टः । प्रतिवेलं श्रीमतां लुप्तघोणाचार्याणामभ्याश एव तिष्ठति । एष एव महाभागो 'दिग्दिगन्तसञ्चारी'ति व्याहार्यते ।

**सर्वे शिष्याः** : बाढम् । स एवैष महाभागः ।

**पौरोगवः** : सुप्रियोदन्तस्तर्हि ।

**(ततः प्रविशति गृहीतशाकभारः प्रियपुष्पकः ।)**

**प्रियपुष्पकः** : **(पौरोगवमुपसृत्य ।)** महाभाग, आहृतानि शाकानि ।

**पौरोगवः** : पुष्पशाकानि, पत्रशाकानि, नालशाकानि, फलशाकानि, कन्दशाकानि, संस्वेदजानि शाकानि वा ?

**प्रियपुष्पकः** : पत्रशाकेषु तावत् पालक्याशाकमेव शाकशाकटे सम्प्रत्युपलब्धुं शक्यते । परं तत्तु प्रत्यहं विधीयत एवेति नाद्य

आनीतं तत् । वास्तूकं, तण्डुलेरकः, कासमर्दः, शितिवारः, चाङ्गेरी, शतवेधिनी प्रभृतीनि शाकानि समाप्तिं गतानि । तान्यपि क्षुद्रशाकान्येव । तस्मात्पत्रशाकानि नानीतानि । अथ नालशाकेषु केवलं सार्षपं नालमेव । तदपि नास्त्युपलब्धम् । संस्वेदजानां शाकानां तु कथैव का ? अनेन कारणेन केवलं पुष्पफलकन्दशाकान्येवाहृतानि सन्ति मया ।

**शिष्याः** : पुष्पशाकेषु किं-किं शाकम् ?

**प्रियपुष्पकः** : केवलं गोजिह्वापुष्पशाकमेव ।

**पौरोगवः** : कदल्याः कुसुमं नोपलब्धं किम् ?

**प्रियपुष्पकः** : नोपलब्धम् ।

**एकतमः शिष्यः** : अगस्तिपुष्पशाकं, शाल्मलीपुष्पशाकं, शोभाञ्जनपुष्पं चापि पुष्पशाकेषु संगृह्यते न वा ?

**प्रियपुष्पकः** : अगस्तिपुष्पशाकं, शोभाञ्जनपुष्पशाकं च नास्ति । अथ शाल्मलीपुष्पशाकाहरणार्थं वनान्तरे गन्तव्यम् । तदर्थं समयो नास्ति ।

**पौरोगवः** : सति गोजिह्वापुष्पकदम्बके किमन्यैः पुष्पशाकैः ? अस्तु । अथ फलशाकेषु कानि-कान्यानीतानि ?

**प्रियपुष्पकः** : पुस्तकशिम्बिका, पर्यङ्कपट्टिका, वृन्ताकम्, हरेणुकाः, ताम्रभण्टाकीफलानि च । अलाबूरप्यानीता ।

**एकतमः शिष्यः** : दीर्घा वा वर्त्तुला वा—कीदृश्यलाबूः ?

**प्रियपुष्पकः** : दीर्घैव न पुनर्वर्त्तुला ।

अन्य: शिष्य: : अथ डिण्डिश[1]-चिचिण्ड[2]-धामार्गव[3]-तुण्डिकेरी[4]-कारवेल्ल[5]-प्रभृतीनि शाकानि नोपलब्धानि ?

प्रियपुष्पक: : मिश्रशाकसाधनार्थं सर्वेषामेव फलशाकानां सद्दशो नास्त्युपयोगः । तस्मात्कानिचिद् बुद्ध्यैव नानीतानि ।

पौरोगव: : अथ कन्दशाकेषु कानि ?

प्रियपुष्पक: : वीरसेनकानि गृञ्जनानि च ।

शिष्याः : शोभनं कृतम् । परं चाणक्यमूलकस्य का प्रवृत्तिः ?

प्रियपुष्पक: : हन्त, विस्मृतं चाणक्यमूलकम् ।

पौरोगव: : अथास्माकं शाकशाकटे नेपालमूलकमपि[6] लभ्यते किम् ?

प्रियपुष्पक: : सम्प्रत्येवोप्तानि तद्बीजकानि । गच्छता कालेन तदपि सुलभम्भविष्यति ।

पौरोगव: : विघटय तावद्भारग्रन्थिम् ।

प्रियपुष्पक: : (शाकभारस्य बन्धवस्त्रग्रन्थि विघटयति ।) सम्यक्परीक्ष्य सञ्चितानीमानि शाकानि ।

सर्वे : (शाकपरीक्षां नाटयित्वा ।) नूनं सम्यक्परीक्ष्याहृतवानसि । एभिरास्वादभूयिष्ठमद्यतनं भोजनं भविष्यतीति नात्र सन्देहः ।

---

१. डिण्डिश:='ढेंढस' इति भाषायाम् ।

२. चिचिण्ड:='चचींडा' इति भाषायाम् ।

३. धामार्गव:='तोरी' इति भाषायाम् ।

४. तुण्डिकेरी='तोंडली' इति मराठीभाषायाम् । 'कुंदरू' इति भाषायाम् ।

५. कारवेल्लम्='करेला' इति भाषायाम् ।

६. 'बड़ी मूली' इति भाषायाम् ।

**पौरोगवः** : ननु वक्तव्यं प्रियपुष्पकः शाकपरीक्षापण्डित इति ।

**(त्रयोऽपि शिष्याः शाकान्यादाय तानि तत्रैव विद्यमानैः शङ्कुलादिभिश्छिन्दन्ति ।)**

**प्रथमः शिष्यः** : इयं शङ्कुला[1] सम्यक्कार्यं करोति । विलोक्यतां कथं सौकर्येण गोजिह्वापुष्पकदम्बकानां पृष्ठस्थितः कठिनः काष्ठभागोऽनया द्राग्विदार्य पृथक्कृतः ।

**द्वितीयः शिष्यः** : पृथक्कृतकठिनपृष्ठभागानि गोजिह्वापुष्पाणि इतः प्रयच्छ । अस्मिन्काष्ठपटले स्थापयित्वा तानि सूक्ष्मं शकलयाम्यसिधेनुकयाऽनया[2] ।

**प्रथमः शिष्यः** : **(द्वितीयाय शिष्याय यथानिर्दिष्टानि गोजिह्वापुष्पाणि दत्त्वा तृतीयं शिष्यमुद्दिश्य ।)** भोः, सम्यक्क्षालितानि किं जलेन वीरसेनकानि ? तथात्वे तानीतः प्रयच्छ ।

**(तृतीयः शिष्यस्तथा करोति ।)**

**प्रथमः शिष्यः** : **(पौरोगवमुद्दिश्य ।)** अथैतेषां वीरसेनकानामेकैकस्य कति खण्डाः कृताः पाकाय साधवः स्युः ?

**पौरोगवः** : चत्वारः खण्डा एकैकस्य पर्याप्ता भवेयुः । अधिकाकारवतोऽष्टावपि खण्डाः कर्त्तुमुचिताः ।

**द्वितीयः शिष्यः** : गृञ्जनानि, पुस्तकशिम्बिकाः, पर्यङ्ककपट्टिका

---

१. शङ्कुला=खण्डनसाधनम् । (व्याकरणपुस्तकेषु तृतीयातत्पुरुषसमासप्रकरणे एष शब्दः पठितोऽस्ति । यथा, 'शङ्कुलया खण्डः=शङ्कुलाखण्ड इति ।)

२. असिधेनुका=छुरिका ।

इत्यादीनि सूक्ष्मं शकलीकृतानि। अथ हरेणुकफलान्यपि विश्लेषणीयानि किम् ?

**पौरोगवः** : अवश्यं विश्लिष्यन्ताम्। हरितमरिचशृङ्गवेरधान्याकादिकमपि सूक्ष्मं कर्त्तनीयम्।

**द्वितीयः शिष्यः** : (तथा कृत्वा।) यथादिष्टं समाचरितम्।

**पौरोगवः** : अस्तु। मन्ये सर्वमिदानीं सम्यक् शङ्कुलितमसिधेनुकितञ्च।

**तृतीयः शिष्यः** : परमिमानि ताम्रभण्टाकीफलानि नैव स्पृष्टानि केनापि।

**पौरोगवः** : नैव चिन्ता कार्या। तानि तथैव तिष्ठन्तु नाम। इदानीमेव न तेषां स्पर्शो विधेयः। शाकपचनं यदा हसन्त्यामारोपितं[1] भविष्यति, शाकशकलानि च व्याघारणार्थं[2] तत्र निक्षिप्तानि भविष्यन्ति, शाकप्रक्रिया च सिद्ध्यभिमुखं यास्यति, तदा खल्विमानि ताम्रभण्टाकीफलानि प्रयोक्ष्यन्ते। आदावेव प्रयुक्तानि चेत्पूर्वतनानि शाकशकलानि नैव सम्यक्स्विन्नानि भवेयुः[3]। एष सूपशास्त्रसिद्धान्तो निपुणं ध्यातव्यः।

**सर्वे शिष्याः** : (नेपथ्याभिमुखं विलोक्य।) हसन्ती तावदारालिकैः सम्यक्प्रदीपिताऽवलोक्यते। तर्हि शाकस्वेदनसाधनक्रियायामपि किं किञ्चित्साहाय्यं क्रियेत ?

**पौरोगवः** : तत्र पर्याप्ता आरालिकाः। युष्माभिश्चिन्ता न कार्या। तत्सर्वमस्माभिरवलोकयिष्यते।

---

१. हसन्ती=चुल्ली। 'चूल्हा' इति भाषायाम्। यस्मिन्भाजने शाकादि पच्यते तच्छाकपचनम्। 'टोप' इति मराठीभाषायाम्।

२. व्याघारणम्=संस्करणम्। 'छौंकना' अथवा 'बघारना' इति भाषायाम्।

३. 'अच्छी तरह गलेंगे नहीं' इति वाक्यार्थः।

**प्रथमः शिष्यः** : शाकभर्जनार्थं[1] किं गृह्यते ? सर्पिर्वा[2] सार्षपं[3] वा तैलं वा ?

**पौरोगवः** : सार्षपेन भर्जितं शाकमास्वाद्यतरम्भवतीति केषाञ्चिन्मतम् । तैलेन भर्जितमास्वाद्यतरम्भवतीत्यन्येषां मतम् । सर्पिषा भर्जितमास्वाद्यतरम्भवतीति परेषां मतम् । तदत्र वस्तुनि नहि कश्चिद् ध्रुवो नियमः स्मर्त्तुं शक्यते। उक्तं च केनापि—'तस्य तदेव हि मधुरं, यस्य मनो यत्र संलग्नमि'ति ।

**द्वितीयः शिष्यः** : कोऽयं श्लोकः ? सम्पूर्णं श्राव्यताम् ।

**पौरोगवः** : पूर्णः श्लोकस्तावदेवञ्जातीयकः ।—

'दधि मधुरं, मधु मधुरं,
द्राक्षा मधुरा, सुधाऽपि मधुरैव ।
तस्य तदेव हि मधुरं,
यस्य मनो यत्र संलग्नम् ।।' इति ।

**तृतीयः शिष्यः** : अम्महे[5], पौरोगवेन श्लोका अप्युदाह्रियन्ते ! किं वक्तव्यम् ?

**(ततः प्रविशति कदम्बकः ।)**

**कदम्बकः** : **(शिष्यानुद्दिश्य ।)** भवतः सर्वानाचार्यपादाः स्मरन्ति ।

---

१. शाकसाधनभाजनं चुल्ल्यामारोप्य घृतं वा तैलं वा किंचिन्मात्रायां तत्र निक्षिप्य तस्मिञ्छाकशकलानि निपात्य सचर्चरध्वनि साधऊर्ध्वीकारं तेषां परितापनम्भर्जनमिति निगद्यते ।

२. सर्पिः=घृतम् ।

३. सार्षपम्=सर्षपतैलम् ।

४. तैलम्=तिलतैलम् ।

५. 'अम्ब हे' इत्यस्यापभ्रष्टमाश्चर्यव्यञ्जकं रूपम् ।

**शिष्याः** : अपि कृतं त्वया तैरादिष्टं कर्म ?

**कदम्बकः** : कृतं तिष्ठति ।

**शिष्याः** : (**पौरोगवमुद्दिश्य।**) तर्हि गच्छामो वयम् ।

**पौरोगवः** : अनुगृहीतोऽस्मि। भवतां साहाय्येन बहुतरं कार्यं सम्पन्नम् । अथ मयाप्यनन्तरकरणीयायारालिका उपदेष्टव्याः । तदिदानीं तत्रैव गच्छामि ।

(**इति निष्क्रान्ताः सर्वे ।**)

इत्यष्टमे संवादे द्वितीयं दृश्यम् ।

## तृतीयं दृश्यम् ।

(ततः प्रविशति परिवेषागारिकः ।)

**परिवेषागारिकः** : (स्वगतम् ।) योजितानि पंक्तिक्रमेण काष्ठपट्टासनानि । संसिद्धपाकवस्तुस्थापनीयानि भाण्डान्यप्युपपादितानि । इदं चतुष्पात्रसङ्कलितं परिवेषणभाजनम् । इदं च कडच्छकद्वयम्[१] । अथादौ प्रत्येकं काष्ठपट्टासनस्य पुरतः सुप्रक्षालिताः स्वच्छ-वस्त्रखण्डेन च सम्यक्प्रोञ्छिताः प्रोज्ज्वलायःपरिवेषण्यः[२] पात्र्यश्च[३] स्थापनीयाः । पूरितप्रत्यग्रकूपोदकमुदपात्रं[४] पानपात्री च तत्रैव प्रतिपादनीया । सैन्धवचूर्णमपि परिवेषणीषु स्थापनीयम् । (तथा कृत्वा पुनरपि स्वगतम् ।) अथ सर्वं निष्पादितम् । अथाह्वानघण्टिका ध्वननीया, येन सर्वेऽप्याश्रमवासिनो भोजनार्थं समागच्छेयुः । (प्रकाशम् ।) कः कोऽत्र भोः ?

---

१. 'कड़छी' इति भाषायाम् । ('दारुहस्तः कडच्छकः' इति कल्पद्रु-कोषकारः ।)

२. 'स्टेनलेस् स्टील की थालियाँ' इति भाषायाम् ।

३. 'कटोरियाँ' इति भाषायाम् ।

४. 'लोटा' इति भाषायाम् ।

(प्रविश्य ।)

कदम्बकः : किं समाचरणीयम् ?

परिवेषागारिकः : आह्वानघण्टिकां शब्दापय ।

कदम्बकः : तथा । (इति निर्गच्छति ।)

(नेपथ्ये घण्टालौहस्य कणकणत्कारः श्रूयते ।)

(ततः प्रविशति पुरस्कृतकृपीटकुण्डलकाचार्यो लुप्तघोणाचार्यस्तच्छिष्याश्च ।)

परिवेषागारिकः : (प्रत्युद्गम्य ।) प्रणम्यते । इदं पाद्यं जलम् । पादौ प्रक्षाल्येताम् ।

(प्रविश्य ।)

कदम्बकप्रियपुष्पकौ : (गृहीतकलशौ प्रत्येकं जनस्य पादयोः वारिधारां मुञ्चतः ।)

सर्वे : (पादप्रक्षालनं नाटयन्ति ।)

परिवेषागारिकः : (गृहीताङ्गप्रोञ्छनः ।) इदमङ्गप्रोञ्छनम् । हस्तपादादिकं प्रोञ्छ्यताम् ।

सर्वे : (प्रोञ्छनक्रियां नाटयन्ति ।)

परिवेषागारिकः : अथेमानि काष्ठपट्टासनानि । आस्यन्ताम् । (इति आसनस्थानं निर्दिशति ।)

सर्वे : (यथाक्रममासनग्रहणं नाटयन्ति ।)

परिवेषागारिकः : (कदम्बकमाहूय ।) कदम्बक, सर्वेषां परिवेषणीषु प्रथमं पाण्डरौदनोऽनम्ल आढकीसूपश्च परिवेष्यताम् ।

(कदम्बकस्तथा करोति ।)

परिवेषागारिकः : (प्रियपुष्पकमाहूय ।) प्रियपुष्पक, त्वमिमां घृतधानीं

गृहाण । यत्र-यत्र पाण्डरौदनः परिवेषितस्तत्र-तत्र तीव्रस्य घृतस्य[1] धारां निपातय ।

**प्रियपुष्पकः** : परमस्यां घृतधान्यां चमसो नास्ति ।

**परिवेषागारिकः** : आः, चमसो नोपनीतः ? एष उपनीयते । (**कक्षान्तरं गत्वा चमसमुपानयति ।**) गृहाणेमं चमसम् ।

**प्रियपुष्पकः** : (**चमसमादाय सर्वेषां परिवेषणीषु परिवेषिते पाण्डरौदने घृतधारां निपातयति ।**)

**परिवेषागारिकः** : कदम्बक, अथ त्वं लेह्यां, राज्यक्तां, मिश्रशाकं च तत्तदर्हे स्थाने परिवेषणीषु परिवेषय । गृहाणेदं चतुष्पात्र-सङ्कलितं परिवेषणभाजनम् ।

**कदम्बकः** : (**परिवेषणभाजने तानि-तानि वस्तून्यादाय सर्वेषां परिवेषणीषु तत्र-तत्र वर्त्तयति ।**)

**परिवेषागारिकः** : सर्वं परिवेषितम् । अथारभ्यतां भोजनम् ।

**सर्वे** : (**सस्वरं मन्त्रपाठं कुर्वन्ति ।**)

मन्त्रः ।—

ओं अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥

(**अथ सर्वे उदकस्याचमनं कृत्वा भोजनारम्भं नाटयन्ति ।**)

**परिवेषागारिकः** : प्रियपुष्पक, निरीक्षायां तिष्ठ । कस्यापि किमप्यपेक्षितं भवेत्—त्वरितं परिवेषणीयम् । कदम्बक, त्वमप्यवधेहि । (**स्मरणं नाटयित्वा ।**) आ, स्मृतम् । तापहरी नैवेतोऽपि परिवेषिता ।

---

१. सम्यक्तापितस्य घृतस्येत्यर्थः । अत्र प्रमाणम्—'घृतं तीव्रं जुहोतन' इति वेदमन्त्रः ।

तत्कदम्बक, त्वं तावत्तामेव परिवेषय ।

**कदम्बकः** : (तथा करोति ।)

**लुप्तघोणाचार्यः** : कृपीटकुण्डलक, रत्नकाञ्चनपुरवासिनां गृहेषु यद्भक्षितं तेनास्मदाश्रमपरिवेषितस्य कीदृशं साधर्म्यम् ?

**कृपीटकुण्डलकाचार्यः** : सर्वं सर्वत्र स्वादिष्ठमेव ।

**लुप्तघोणाचार्यः** : तथापि भेदबहुलं वस्तुजगत् । एकस्य वस्तुनः स्वादुता नैवान्यस्य वस्तुनः स्वादुतया सादृश्यं वहति ।

**कृपीटकुण्डलकाचार्यः** : वैचित्र्यं नाम जगत् । तथापि शाकमिदमद्यतनं कमपि प्रत्यग्रमास्वादं धत्ते ।

**लुप्तघोणाचार्यः** : अस्मादृशामाश्रमे किम्प्रात्यग्र्यं शाकास्वादेषु ?

**कृपीटकुण्डलकाचार्यः** : तापहरी केन निर्मिता ?

**लुप्तघोणाचार्यः** : अस्मत्पौरोगवेण । अतिमात्रं प्रवीणोऽसौ ।

**कृपीटकुण्डलकाचार्यः** : क्व तिष्ठत्यसौ साम्प्रतम् ? अत्राहूयताम् ।

**लुप्तघोणाचार्यः** : (**परिवेषागारिकमुद्दिश्य ।**) असावत्राहूयताम् ।

**परिवेषागारिकः** : यथा भवानाह । (**कदम्बकमुद्दिश्य ।**) कदम्बक, गच्छ । पौरोगवमानय । वक्तव्यमस्मदभ्यागतमहाभागाः स्मरन्तीति ।

**कदम्बकः** : एष आनयामि । (**निर्गतः ।**)

**प्रथमः शिष्यः** : शष्कुलिकायाः पूरिकायाश्च पर्यायः कदा ?

**परिवेषागारिकः** : अवसिता तापहरी[1] ? इदानीमेव शष्कुलिकाः

---

१. ['घृते हरिद्रासंयुक्ते माषजां भर्जयेद्वटीम् । तण्डुलांश्चापि निर्धौतान् सहैव परिभर्जयेत् । सिद्धयोग्यं जलं तत्र प्रक्षिप्य कुशलः पचेत् । लवणार्द्रक-हिङ्गूनि मात्रया तत्र निक्षिपेत् । एषा सिद्धि समायाता प्रोक्ता तापहरी बुधैः ।' —इति भावमिश्रः ।]

पूरिकाश्च परिवेष्यन्ते। (प्रियपुष्पकमुद्दिश्य।) प्रियपुष्पक, गच्छ। सूपशालायाः शष्कुलिकाकण्डोलमत्रोपानय[1]।

**प्रियपुष्पकः** : एष उपानयामि। (**निर्गतः।**)

**द्वितीयः शिष्यः** : किञ्चिल्लेह्याऽपेक्ष्यते।

**तृतीयः शिष्यः** : मया शाकं, तापहरी, घृतं च।

**परिवेषागारिकः** : (**परिवेषणभाजनं हस्ते समादाय।**) गृह्यतां यस्य यदपेक्षितम् (**इति तानि-तानि वस्तूनि तस्य-तस्य परिवेषयति।**)

**प्रथमः शिष्यः** : किञ्चित्तापहरी ममापि।

**परिवेषागारिकः** : इयं गृह्यताम्। (**परिवेषयति।**)

**लुप्तघोणाचार्यः** : कृपीटकुण्डलकाचार्याणामपि किञ्चित्तापहरी भवतु।

**परिवेषागारिकः** : गृह्णन्तु महाभागाः। (**इति कृपीटकुण्डलकाचार्यमागृह्णाति।**)

**कृपीटकुण्डलकाचार्यः** : प्रभूता वर्तते। अधिकं कस्मात्?

**परिवेषागारिकः** : गृह्यतां-गृह्यतां पर्याप्तं गृह्यताम्। इयमेव प्रभूता चेदप्रभूता कीदृशी भवति?

(**इति कडच्छकेन तापहरीं कृपीटकुण्डलकाचार्यस्य परिवेषण्यां निपातयति।**)

**कृपीटकुण्डलकाचार्यः** : (**विहस्य।**) अभ्यागत इति नैव तस्योदरं विदारणीयम्।

**प्रथमः शिष्यः** : एकदा बहु भुक्तमिति नैवोदरदेवता कुप्यति कस्यापि।

---

1. कण्डोलः=पिटक इत्यर्थः।

द्वितीयः शिष्यः : कुपितायामप्युदरदेवतायामस्माकमौषधागारे पर्याप्तं लवणभास्करचूर्णं तत्कोपपरिहारार्थम् ।

(सर्वे हसन्ति ।)

कूपीटकुण्डलकाचार्यः : (सस्मितम् ।) एतदर्थमेव किं तच्चूर्णं सम्भृतं तत्र ?

(ततः प्रविशति गृहीतशष्कुलिकाकण्डोलः प्रियपुष्पकः पौरोगवद्वितीयः कदम्बकश्च ।)

पौरोगवः : (कूपीटकुण्डलकाचार्यमुपसृत्याञ्जलिं बद्ध्वा ।) प्रणम्यते महाभाग !

कूपीटकुण्डलकाचार्यः : अहो, भवाँस्तु दृष्टचरः !

पौरोगवः : ओम् भगवन्, अनेककृत्वो लब्धवानस्मि भवद्दर्शनसौभाग्यम् ।

परिवेषागारिकः : प्रियपुष्पक, शष्कुलिकाः पूरिकाश्च परिवेषय ।

प्रियपुष्पकः : (तथा कुर्वन् ।) गृह्यन्तां प्रत्यग्रं कटाहिकाया निष्पतिताः शष्कुलिकाः पूरिकाश्च ।

लुप्तघोणाचार्यः : ममानभिप्रेता इमाः ।

प्रथमः शिष्यः : उपस्थितेषु कूपीटकुण्डलकाचार्येषु नैवं वक्तव्यमाचार्यपादैः ।

लुप्तघोणाचार्यः : (विहस्य ।) अस्यार्थं तावल्लवणभास्करचूर्णस्य योजना कृता । अथ मदर्थं किं चूर्णं योजयिष्यते ?

द्वितीयः शिष्यः : भवदर्थं हिग्वष्टकं चूर्णम् ।

तृतीयः शिष्यः : हिग्वष्टकचूर्णाभावे जम्बीरद्रावस्य योजना करि-

ष्यते । अस्माकमौषधागारे काचभरणीषु[1] प्रभूतो जम्बीरद्रावः पूरितस्तिष्ठति ।

**प्रथमः शिष्यः** : जम्बीरद्राव एव किं यवानीषाण्डवोऽपि प्रभूतं पूरितो वर्त्तते ।

**तृतीयः शिष्यः** : परं किमेतैरौषधैराचार्यपादस्य । आचार्यपादस्य जठराग्निस्तु तथा तीव्रो यथा कर्करकानपि[2] भक्षितान्—(इत्यर्धोक्ते ।)

**लुप्तघोणाचार्यः** : (निवार्य ।) अलमलम् । प्रचुरम्प्रोक्तवानसि ।

**कृपीटकुण्डलकाचार्यः** : लुप्तघोण, भुज्यताम् । रक्ष्यतां शिष्याणां हृदयम् ।

**लुप्तघोणाचार्यः** : नाहमभ्यागतः । अभ्यागता एवागृह्य भोज्यन्ते न पुनर्गृहवासिनः । (इति मधुरं स्मयते ।)

**कृपीटकुण्डलकाचार्यः** : यावद्बुभुक्षन्तु भोक्तव्यमेव । तदधिकम्प्रत्याग्रहातिशयोऽश्रेयान् ।

**लुप्तघोणाचार्यः** : शान्ता मे बुभुक्षा । तस्मादाग्रहो व्यर्थः ।

**सर्वे शिष्याः** : इदानीमेव कथं शान्ता भवतो बुभुक्षा ? कियदस्ति भुक्तम् ?

**लुप्तघोणाचार्यः** : प्रभूतम्भुक्तम् । बालाः, अथ भवद्भिर्भोक्तव्यं यावच्छ्रद्धाप्रतीघातम् । नाहमधिकम्भोक्तुं समर्थः ।

**कृपीटकुण्डलकाचार्यः** : अस्तु । मयापि नैवाधिकं शक्यते भोक्तुम् । अथ बालाः, भवद्भिर्भुज्यताम् । आवाभ्यां परिणतवयस्काभ्यां

---

१. 'काँच के मर्तबानों में' इति भाषायाम् ।

२. कर्करकाः='कंकर' इति भाषायाम् ।

नैव भुज्यत इति नैव युक्तो भवतां भोजनसङ्कोचः । सावकाशमास्वाद्यन्तां[1] भोज्यविशेषा अद्यतनाः ।

**परिवेषागारिकः** : भोजनावसानसूचकं परमान्नपरिवेषणमितोऽपि[2] शिष्यते । तदर्थमपि स्थानं रक्षणीयमुदरे ।

**सर्वे** : (भोजनपूर्ति नाटयन्तः ।) परिवेषय तावत्परमान्नम् ।

**कदम्बकः** : (परमान्नभाजनमादाय ।) इदम्परमान्नम् । (इति सर्वेषां परवेषयति ।)

**शिष्याः** : अहह, जातिफलगोस्तन्यङ्कोटवातादकश्मीरजप्रभृतिभिर्गन्धपुष्टिद्रव्यैः[3] समवेतं, सुधामधुरं, परमहृदयाह्लादकरं समितावर्त्तिकापरमान्नमेतत्[4] ।

**लुप्तघोणाचार्यः** : (कृपीटकुण्डलकाचार्यमुद्दिश्य ।) कथं रोचते परमान्नमेतद्भवते ? अत्रापि बहु पाण्डित्यमस्त्यस्मत्पौरोगवस्य ।

**कृपीटकुण्डलकाचार्यः** : (परमान्नमास्वादयन् ।) नूनं महत्पाण्डित्यम् । एतादृक्षा एव सूपशास्त्रपण्डिताः कस्याप्याश्रमस्य कण्ठाभरणं भवन्ति । एभिरेव तुष्यन्त्यभ्यागताः प्रसीदन्ति चाश्रमवासिनः । लुप्तघोण, एतमपि प्रवासार्थं संगृहाण । अयं रत्नकाञ्चनपुरेऽपि स्वकीयं पाकपाण्डित्यं प्रदर्शयतु ।

---

१. सावकाशम्=‘आराम से’ इति लोकभाषायाम् ।

२. परमान्नम्=पायसम् । ‘खीर’ इति भाषायाम् ।

३. जातिफलम्=जायफल; गोस्तनी=किशमिश; अंकोटः=पिस्ता; वातादः=बादाम; कश्मीरजः=केसर ।

४. समितावर्त्तिकाः=सेवइयाँ ।

**पौरोगवः** : अनुगृहीतोऽस्मितमाम् ।

**शिष्याः** : **(सैकस्वरम् ।)** प्रियं नः, प्रियं नः ।

**लुप्तघोणाचार्यः** : अस्तु तावत् । अवसितमिव सर्वेषां भोजनं प्रतिभाति । तद् गृह्यतामाचमनीयम् ।

**सर्वे** : **(उदकमाचम्योत्थानं नाटयित्वा परिवेषागारिकमुद्दिश्य ।)** परिवेषागारिक, करप्रक्षालनस्थानन्तावन्निर्दिश ।

**परिवेषागारिकः** : **(प्रक्षालनस्थानं निर्दिशन् ।)** इत इतो भगवन्तः ।

**(इति निष्क्रान्ताः सर्वे ।)**

इत्यष्टमे संवादे तृतीयं दृश्यम् ।

इत्यष्टमः संवादः ।

(ततः प्रविशति कपिञ्जलः ।)

**कपिञ्जलः :** (स्वगतम् ।) अहमस्मि नाम्ना कपिञ्जलः । संस्कृतं जानामि । तस्मात्संस्कृते किमपि लिखामि । तदिदानीमस्य गृहवातायनस्य पार्श्वे समुपविश्य संस्कृतभाषायां कानिचित्पत्राणि कस्मान्न लिखेयम् ? संस्कृतज्ञाः सुहृदोऽपि मे सन्त्येव । काश्चन सुहृद्भावमुपगता भगिन्योऽपि संस्कृतं जानन्ति । ता उद्दिश्यैव लिखेयं साम्प्रतम् । (पुरतो विलोक्य ।) पत्रमिव प्रतिभाति पतितमत्र । (उत्थाप्य ।) पत्रलेखनस्मरणसमकालमेव लब्धोऽयम्पत्रसम्प्राप्तियोगः । कुतः समायातो भवेदयमावरकः[1] ? (आवरकं परितो विलोक्य ।) प्रयागनगरतः प्रेषितः केनाऽपि । कस्येमान्यक्षराणि भवेयुः ? (विमर्शं रूपयित्वा ।) आ ज्ञातम् । कुमार्या प्रभातमञ्जर्या प्रेषितम्भवेत्पत्रमिदम् । अस्तु । आवरकमिमं विश्लिष्य पश्यामि । (इति विश्लिष्यावरकं तदन्तर्भागात्पत्रं बहिर्निष्कासयति ।) हन्त, कियद् विपुलं पत्रमेतत् ? का खलु संख्या पृष्ठानाम् ? (गणयित्वा) हन्त, षोडश पृष्ठानि लिखितानि । किमत्र लिखितं भविष्यति ? यावद्वाचयामि । (पुरतो विलोक्य ।) हन्त, भार्या मे कर्मरङ्गिका सामायाति । किमिदानीं व्यवसितव्यम् ? आगच्छतु नाम ।

---

१. 'कवर' (लिफाफा) इत्यभिप्रेतोऽर्थः ।

ताम्प्रदर्श्यैव पत्रमिदं वाचनीयम् । (नेपथ्याभिमुखं प्रकाशम् ।) कर्मरङ्गिके, प्रयागात्प्रभातमञ्जर्या पत्रं सम्प्राप्तम् । तद् आगच्छ । आवां तत्पठावः ।

(ततः प्रविशति सौभाग्यवती कर्मरङ्गिका ।)

**कर्मरङ्गिका** किम्भणितं प्रभातमञ्जर्याः पत्रमिति ? केयम्प्रभातमञ्जरी नाम? कश्चन नूतन एव पराक्रमः प्रतिभाति। काभिः—काभिर्भवतः परिचय इति कः शक्नुयाद्वक्तुम् ? (इति विहसति ।)

**कपिञ्जलः** अनया नवीन एव मे पत्रपरिचयः । एकदा मयाऽत्रत्ये साप्ताहिके पत्रे 'सहकारमञ्जरी'ति नाम्ना लोकभाषायां ग्रथितं गीतमेकं प्रकाशनार्थम्प्रहितम्। तत्र यस्मिन्पृष्ठे मम गीतम्प्रकाशितमासीत्तस्मिन्नेवैतस्या अपि गीतम्प्रकाशितम्। आवासप्रवृत्तिरपि[1] नौ तत्र प्रकाशिताऽभवत् । तत्साहाय्येन मया पत्रमेकं तस्यै लिखितमासीत् । तस्योत्तरमपि द्रागेवैवं समायास्यतीति नैव चिन्तितमासीत् । अथ पत्रेऽस्मिन्किन्तया लिखितम्भविष्यतीति त्वमपि ज्ञातुमुत्सुका भवेः कदाचित्। तद् गृहाण त्वमेव वाचयेदम्। अहं श्रोष्यामि । (इति पत्रं तस्यै समर्पयति ।)

**कर्मरङ्गिका** अम्मो, पत्रमिदं वा पुस्तकमिदं वा ! कुत एतावान्काल एताभिः सम्प्राप्यते पत्रलेखनार्थमिति न ज्ञायते । अपि नाम प्रणयनिवेदननिबन्धनमेतद्भविष्यति ?

**कपिञ्जलः** : वाचय तावत् । किं लिखितं किन्निबन्धनञ्चैतदिति सर्वं स्फुटम्भविष्यति ।

**कर्मरङ्गिका** : (पत्रं वाचयति ।)—"प्रियबन्धो, भावत्कम्पत्रमद्य प्रभाते

---

१. आवासप्रवृत्तिः='हाउस एड्रेस' (घर का पता) ।

समासादितम्। सर्वथा अप्रत्याशितपूर्वन्तत्। कश्चन भवादृक्षः पत्रं मां प्रेषयिष्यतीति कल्पनाऽपि मनोगोचरतां नासीद् गता। अतीवानुगृहीतामात्मानं मन्ये पत्रेणैतेन। तदर्थम्बहवो धन्यवादाः।"

**कपिञ्जलः** : साधीयः संस्कृतम्। पत्रलेखने पटुतरा प्रतिभाति।

**कर्मरङ्गिका** : पाटवं कस्मान्नोपजायेत ? भवन्तमुद्दिश्य लेखनाय प्रवृत्तः पृथग्जनोऽपि[1] कलयेल्लेखनपाटवम्। इयन्तु नाम जात्या वृत्त्या च कवयित्री। अस्याश्चेत्पाटवं नोपजायेत तर्हि कस्या उपजायेत ?

**कपिञ्जलः** : आदौ पत्रन्तावत्सम्पूर्णं वाचय।

**कर्मरङ्गिका** : (साकूतम्।) किमधिकतरमुत्कण्ठितं चेतः पत्रगतवस्तुविज्ञानार्थम् ?

**कपिञ्जलः** : तादृशं त्वदीयमेव कदाचित्। मदीयन्तु नास्ति।

**कर्मरङ्गिका** : (साचिवीक्षितकेन।) साहजिक एवेदृशः समुत्सुकीभावः। काचिद्रमणीयरूपकान्तिः, सुस्निग्धनवयौवना, सुमधुरवाग्व्यापारविशारदा, सर्वसुकुमारगुणोपेता प्रयागकुमारी पत्रं लिखति। पत्रमपि नान्यजनपत्रनिर्विशेषम्। प्रणयरसपरिबन्धुरम्पत्रम्। तत्कस्मान्न पुरुषगुणोपेतस्य भवतो मनसस्तादृशो भावः स्यात् ?

**कपिञ्जलः** : कस्मात्प्रागल्भ्यमिदम्प्रदर्श्यते ? नैव रोचते पठनं तन्मह्यमेव प्रतियच्छ तत्पत्रम्।

**कर्मरङ्गिका** : कस्मादशोभनम्प्रतिभाति मे वचनम् ? नैतत्साहजिकम् ?

**कपिञ्जलः** : साहजिकासाहजिकवस्तुविनिर्णयार्थं नाहमत्र स्थितोऽस्मि। पत्रं वाचय। तदर्थमेव मदीया समुत्कण्ठा।

**कर्मरङ्गिका** : (विहस्य) तद्वाचयामि—(पत्रं वाचयति।) "यैः शब्दैर्भवता

---

१. सामान्योऽपि मनुष्यः।

मम गोतस्य श्लाघा विहिता, तैर्भृशमुत्साहिताऽस्मि । भवदीय-म्पत्रमिदमेतदर्थकं विलोक्य समधिकमाश्वसितीव मे हृदयम् ।

"भवता मम परिचयो नैवानुयुक्तः । तथापि स्वकीयं परिचयं स्तोकैरेव शब्दैर्लिखितुं समुद्यतास्मि । नात्र दोषः कश्चनाविष्करणीयः ।

"अहं ब्राह्मणकन्यकाऽस्मि । जनको मे दिवं गतः । विधवा मे जननी यथा कथमपि स्ववार्धक्यदिनान्यतिवाहयति । बन्धुश्चैकः सपरिजनो जीविकामर्जयन्नस्मान्बिभर्ति । अष्टादशवर्षदेशीयाऽहम् । जीवनस्यैकाकित्वोद्भवं विषादमपनोदयितुं यदा कदाचित् कानिचिद् गीतानि लोकभाषायां विरच्यन्ते । तानि भवादृशाय कविसत्तमाय रोचन्त इति ज्ञात्वा कृतार्थतायाः परां काष्ठामनुभवति मे चेत इति कै शब्दैर्निवेदयेयम् ?" **(पत्रवाचनाद्विरम्य ।)** अपि श्रुतम् ? एवंविधानि पत्राणि हुतवहे समर्पणीयानीति समायाति मे चेतसि ।

**कपिञ्जलः** : **(विहस्य ।)** पत्रमेतत्तया लिखितं नैव मया । अग्रे किं लिखितमस्ति । वाचय यावदपि पत्रम् ।

**कर्मरङ्गिका** : **(सक्रोधम् ।)** वाचयामि—वाचयामि । **(वाचयति ।)**— "भवता स्वकीयः परिचयो नैव लिखितः । किं वयः, को वर्णः, कोऽभिजनः, का वृत्तिः, कुटुम्बस्य के सदस्याः, विवाहितो भवान्न वा, किमधीतम्, कुत्राधीतम्, के भवतोऽभिरुचिविषयाः, कासु-कासु भाषासु कीदृशं-कीदृशम्पाण्डित्यम्, कश्च भवतो भविष्यत्कालिकः कार्यक्रम इत्यादिकं सविस्तरं भवानपि स्वकीयं परिचयमवश्यम्पत्रस्यास्योत्तरे प्रदास्यतीत्याशासे । भवद्विषये

कीदृशं संजातकुतूहलं मदीयं मन इति नैव पार्यते भवताऽनुमातुम्।''
(पुनः पत्रवाचनाद्विरम्य।) नाहमेतदूर्ध्वं वाचयिष्यामि। भवतैव तत्सर्वं वाचनीयम्।

कपिञ्जलः : कयाऽपि प्रेषितम्पत्रमेव विलोक्यैवमुद्विग्नासि। यदि काचित्स्वयमेवात्र समागता भवेत्तर्हि—(इत्यर्धोक्ते।)

कर्मरङ्गिका : (सक्रोधम्।) तर्हि तस्या मूर्धानं भिनद्मि।

कपिञ्जलः : (कोमलया वाचा।) नैव सम्भ्रमः कर्त्तव्यः। अयं कपिञ्जलो भवदीयः। नायं स्वप्नेऽपि कस्या अप्यन्यस्या भवितुमर्हति। तस्मान्नोद्वेगः समाश्रयणीयः। केवलं कयाऽप्यपरिचितया पत्रमेकं लिखितमिति कृत्वा किं जीवनमस्माकमेकपद एव विश्लेषकलुषितम्भविष्यति ? मूढा ते कल्पना। इतः प्रयच्छ तत्पत्रम्। तुभ्यं नैव रोचते चेत्पत्रस्यैतस्य वाचनं तत्त्यक्तं नाम मयाऽपि श्रवणकुतूहलम्।

कर्मरङ्गिका : (किञ्चित्प्रकृतिमापद्य।) कस्माद्भवता तद् गीतं 'सहकारमञ्जरी'ति कृतकेन नाम्ना साप्ताहिके प्रकाशनाय प्रहितम् ?

कपिञ्जलः : सम्यगनुयुक्तवत्यसि। शृणु कारणम्। अनेककृत्वो मया स्वेनैव नाम्ना प्रेषितानि सुरुचिराण्यपि गीतानि तत्पत्रसम्पादकेनावहेलितानि। तस्मात्परीक्षितुं सम्पादकहृदयं मया कृतकेन स्त्रीनाम्ना प्रेषितं तद् गीतम्। कीदृशं विस्मयस्थानमिदं यत्तदेव गीतं प्रकाशितञ्चापि तस्मिन्नेव साप्ताहिके सम्यगलङ्कृत्य। एतेन तावत्त्वया प्रसन्नया भवितव्यम्।

कर्मरङ्गिका : प्रमाणीकरोम्येतद्भवदुक्तम्। परमियम्प्रभातमञ्जरी

कस्मात्पत्रप्रेषणेन सनाथीकृता ? तत्र किं कारणं समुत्पन्नम् ?

**कपिञ्जलः** : (विहस्य।) तस्यापि शृणु कारणम्। यदा 'सहकारमञ्जरी'ति कृतकं नामाश्रित्य प्रेषकः पुरुषो मादृशस्तस्य गीतस्य, तदा 'प्रभातमञ्जरी'ति नाम्ना प्रकाशितं तद् गीतमपि परमार्थतः स्त्रीकर्तृकमुत तदपि कृतकस्त्रीनामधारिपुरुषकर्तृकमिति विज्ञातुमधीरमासीन्मदीयं मन इति। तस्मादेव कारणात्तत्पत्रं प्रहितमासीत्।

**कर्मरङ्गिका** : युज्यते-युज्यते। नितरां युज्यते। परं मन्ये इदानीमेतत् पत्रमासाद्य कदाचिद्भवतो मनः सञ्जातकुतूहलातिरेकं सत्तस्या एव प्रयागकुमारिकायाः पृष्ठानुधावनं नैव स्वीकरिष्यतीति।

**कपिञ्जलः** : अये, कर्मरङ्गिकायां संसक्तचित्तस्य कपिञ्जलस्य मनः कुमारीम्प्रभातमञ्जरीमनुधाविष्यतीति किं सम्भाव्यते स्वप्नावस्थायामपि !

**कर्मरङ्गिका** : (अर्थगर्भं चक्षुर्व्यापारं नाटयित्वा।) अहो, कस्मान्न सम्भाव्यते ? 'अभिनवगुणरागी प्रायशो लोक एष' इति वक्तुमुपक्रमतां महाकवीनामेव परम्परायां तावत्तिष्ठति भवान् ? (विमृश्य।) अद्यास्माकं समाजस्य वार्षिकोत्सवनिमित्तो महाभोजः समायोजितोऽस्तीति विज्ञापनार्थमेवाहमत्रागताऽऽसम्। तत्कृपया, द्रागेव स्नानादिकं कृत्वा संसिद्धो भवतु।

**कपिञ्जलः** : आ, साधु विज्ञापितम्। स्नानस्य विहितवत्यसि किं सर्वमपि प्रबन्धम् ?

**कर्मरङ्गिका** : अथ किम् ?

**कपिञ्जलः** : एवन्तर्हि चल स्नानागारे । सुखोष्णेन पयसा सम्यगभिषिञ्च माम् । अहं च पद्मासनं बद्ध्वा भूयिष्ठं स्नानसौख्यमनुभविष्यामि ।

**(इति मन्दहासावभासितवदनौ तावुभावपि निष्क्रान्तौ ।)**

इति नवमः संवादः ।

(ततः प्रविशति करहाटकस्तद्भगिनी कलकिङ्किणी च ।)

**करहाटकः** : कलकिङ्किणि, अयमत्र कः ?

**कलकिङ्किणी** : अयं कठिल्लकः ।

**करहाटकः** : (विहस्य ।) कथं मृद्गुडक इव पिंडीभूय गृहीताच्छादनः स्वपिति ?

**कलकिङ्किणी** : अतिमात्रम्परिश्रान्तः प्रतिभाति ।

**करहाटकः** : किमनेनाद्य तादृशं समाचरितं, येनास्य तावान्परिश्रमः ?

**कलकिङ्किणी** : एतदपि प्रष्टव्यम्भवति किम् ? बालानाम्प्रभातकालादारभ्य दिवसावसानं यावत्सर्वमपि श्रमायैव भवति ।

**करहाटकः** : निद्रासुखम्प्रकाममनुभवतु नामायम् । आगच्छ तावत् । अद्याहं त्वां संस्कृतं शिक्षयिष्यामि । मदीयम्पुस्तकं कुत्रास्तीति जानासि किम् ?

**कलकिङ्किणी** : संस्कृतं शिक्षयिष्यसि ? किमेतावत्संस्कृतं त्वया स्वयमपि शिक्षितं वर्त्तते, येन मां शिक्षयिष्यसि ?

**करहाटकः** : न वेत्सि यत्पाठशालायां स्वकीये वर्गे संस्कृतभाषाविषये योग्यतायां सर्वप्रथमोऽहमेवेति ।

**कलकिङ्किणी** : (सस्मितम् ।) पाठशालायाम्प्रथमत्वमन्यत्, मादृशीं

च संस्कृतमध्यापनमन्यत् । किं त्वं मां त्वत्तो न्यूनामवगच्छसि संस्कृतभाषावैशारद्ये ?

**करहाटकः** : एवं नाम वैशारद्यं ते तर्हि सुमहानेष प्रसादविषयः । केनाध्यापितं ते संस्कृतम् ?

**कलकिङ्किणी** : मात्रा । तयैवाहं संस्कृतमध्यापिता ।

**करहाटकः** : (**सहर्षम् ।**) अये, मात्रा संस्कृतमध्यापितम् ? अपि नाम सा संस्कृतं जानाति ?

**कलकिङ्किणी** : जानातीति किम्, सैव पितरमपि संस्कृत मध्यापितवत्यस्ति । मात्रा यदपि संस्कृतं स्वपितुर्गृहे शिक्षितमासीत्तत्कृत्स्नमपि पितरमध्यापितवती ।

**करहाटकः** : एवं किम् ? मया तावदालोचितं यत्पितैव नः संस्कृतस्य प्रथमो विद्वानिति । अन्यत्किङ्किमध्यापितासि त्वं मात्रा ?

**कलकिङ्किणी** : लोकभाषां, महाराष्ट्रभाषां, विश्वभाषां च ।

**करहाटकः** : विश्वभाषामप्यध्यापिताऽसि ? सा तु मयाऽपि ज्ञायते । अहं तस्यां वक्तुमपि प्रभवामि ।

**कलकिङ्किणी** : अथ कीदृशन्ते लोकभाषाज्ञानम् ?

**करहाटकः** : लोकभाषाया ज्ञानन्तु मर्यादितमेव ।

**कलकिङ्किणी** : (**प्रहसन्ती ।**) मर्यादितन्ते लोकभाषाज्ञानम् ? को लाभो विश्वभाषाविज्ञानेन यदा लोकभाषैव सम्यङ् नैव ज्ञायते ।

**करहाटकः** : (**विचिन्त्य ।**) कलकिङ्किणि, तातस्तु लोकभाषायां काव्यमपि करोति । तस्य श्रूयते प्रभूतं लोकभाषावैशारद्यम् ।

**कलकिङ्किणी** : मयाऽपि तथैव श्रुतमस्ति । परं तस्यैव मुखात्तस्य काव्यस्य श्रवणावसरो नेतोऽपि प्राप्तः ।

**करहाटकः** : कलकिङ्किणि, तर्हि एवं क्रियताम् । अद्य सायं यदा तातः कार्यनिलयाद् गृहमागमिष्यति तदाऽऽवाभ्यां स प्रार्थनीयः काव्य-श्रावणाय ।

**कलकिङ्किणी** : नैवासौ ताम्प्रार्थनां स्वीकरिष्यति ।

**करहाटकः** : कुतः ?

**कलकिङ्किणी** : बाल्यावस्थायां बालैः श्रवणीयं काव्यमन्यादृशं भवति तारुण्ये च तरुणैः श्रवणीयं काव्यमन्यादृशं भवतीति । तातः कथयति यत्तस्य पार्श्वे बालैः श्रवणीयं काव्यं नास्तीति । तस्य काव्यं केवलं तरुणजनश्रवणोचितमेवेति ।

**करहाटकः** : अहमपि सत्वरमेव तरुणो भविष्यामि । तरुणे सञ्जाते नाम मयि पितुः काव्यं ममापि श्रवणयोग्यं भविष्यति । नैतत्किम् ?

**कलकिङ्किणी** : अवश्यमवश्यम् । परं त्वत्तोऽपि पूर्वतरं तारुण्यन्तु ममैव प्रतिपत्स्यत इति पितरौ वदतः ।

**करहाटकः** : सत्यन्तत् । मम नाम यदा तारुण्ये पादप्रवेशस्तदा त्वं तावद् वृद्धा सम्पत्स्यसे । अहह, वृद्धा सम्पत्स्यसे वृद्धा—गलितनखदशना वृद्धा !

**(इति हसति ।)**

**कलकिङ्किणी** : पिधेहि वदनम् । वृद्धस्त्वम्भविष्यसि । अहं कस्माद् वृद्धा भवामि ?

**(इति लीलया वदनं विकरोति ।)**

**करहाटकः** : विकुरु वदनम् । मम किन्तेन ? तवैव वदनं विकृतिं यास्यति । विकृते वदने तरुणावस्थायां नहि कश्चनाऽपि त्वां विकृतवदनां मत्वा परिणेतुमुद्युक्तो भविष्यति ।

कलकिङ्किणी : (लीलया जिह्वादंशनं नाटयति ।)

करहाटकः : तवैव जिह्वा विकारमेष्यति । मम किन्तेन ?

कलकिङ्किणी : (उत्तरौष्ठसमाकर्षणलीलां नाटयति ।)

करहाटकः : मम किन्तेन ? तवैवोत्तरौष्ठो विकृतो भविष्यति । तेन मुखस्य विकारस्तावदितोऽपि वृद्धिं गमिष्यति ।

(ततः प्रविशति तयोर्जननी कुन्दुरुकी ।)

कुन्दुरुकी : कलकिङ्किणिके, इतस्तावत् ।

कलकिङ्किणी : (प्रद्रुत्य मातरं संलगति ।) अम्ब, किमसि वक्तुकामा ?

कुन्दुरुकी : मयाऽऽकर्णितं यन्नृत्यशास्त्रे पाटवन्ते बहुतरम्प्रवर्धत इति । सौभाग्यवती काकोदुम्बरिका त्वां नृत्यं सम्यक् शिक्षयति । नैवैतत्?

कलकिङ्किणी : बाढमम्ब, सौभाग्यवती काकोदुम्बरिका मयि नितरां स्निह्यति । अतीव प्रेम्णा नृत्यशास्त्रस्य सर्वमपि तत्त्वं मां बोधयति ।

करहाटकः : (सप्रहासम् ।) अम्ब, किमस्ति नृत्यशास्त्रे ? धमत्कारेण च्छमत्कारेण चाध ऊर्ध्वं पादपातनं विहितं, करशाखाचालनं चेतस्ततः कृतं—सम्पन्ना नाम नृत्यविद्या ।

कुन्दुरुकी : (विहस्य ।) त्वदर्थं तावन्नृत्यविद्यातत्त्वं तदेव । (कलकिङ्किणीमुद्दिश्य ।) शृणु कलकिङ्किणि, त्वदर्थमद्यैव सरस्वतीवीणाऽस्माभिः क्रीता । वीणावादनस्यापि त्वया सम्यगभ्यासो विधातव्योऽस्त्यतः परम् । तदेहि त्वां प्रत्यग्रक्रीतां तां सरस्वतीवीणां दर्शयामि ।

करहाटकः : अम्ब, द्रष्टुं किमहमप्यागच्छेयम् ?

कुन्दुरुकी : अवश्यं वत्स, त्वमपि पश्य कीदृशी सा सरस्वतीवीणेति ।

**कलकिङ्किणी :** **(सानन्दं करहाटकमुद्दिश्य ।)** आ हा, मदर्थं सरस्वती-वीणा गृहीता । त्वदर्थं किं गृहीतम्—अङ्गुष्ठम् !

**(इति सव्यहस्ताङ्गुष्ठप्रदर्शनलीलां नाटयति । करहाटकश्च तत्प्रत्युत्तरे जिह्वादंशनलीलां नाटयति ।)**

**(इति निष्क्रान्ताः सर्वे ।)**

इति दशमः संवादः ।

एकादशः संवादः ।

# कपित्थककरमर्दिकीयम् ।

(ततः प्रविशति कपित्थकस्तज्जननी करर्मदिका च ।)

**कपित्थकः** : अम्ब, श्रूयते भगिनी मे पद्मकर्कटी नृत्यमपि सम्यग्जानात्यनुष्ठातुमिति।

**करर्मदिका** : जानामि । त्वमपि सङ्गीतविद्याया अभ्यासमनुतिष्ठ ।

**कपित्थकः** : अम्ब, सङ्गीतं केन विधिना शक्यते द्रागभ्यसितुम् ?

**करर्मदिका** : द्वौ विधी । अपरान् गायतो जनाननुकृत्य स्वयंकृष्या-[1]ऽभ्यसनमेको विधिः । व्यवस्थितं च कस्यापि संगीतशिक्षकस्य समीपं गत्वा तदधीनं संगीताभ्यसनं द्वितीयो विधिः । तत्र संगीतशिक्षकात्संगीतशिक्षणमेव श्रेयसे भवतीति त्वयापि कश्चन संगीतशिक्षकः समाश्रयणीयः । स त्वां द्रागेव संगीतेन सह सुपरिचितं करिष्यति।

**कपित्थकः** : संगीतशिक्षायै कानि वस्तून्यावश्यकानि ?

---

१. 'स्वयंकृषिरि'ति तेलुगुभाषायाम्प्रयुज्यमानः संस्कृतभाषाशब्दः । तत्र 'कृषि'शब्दः 'परिश्रमः' 'उद्यमः' इत्येवंजातीयकेऽर्थे प्रयुज्यते । एतावता, 'स्वयंकृषि'शब्दस्यार्थो भवेत्—कस्याऽप्यन्यस्य साहाय्येन विनैव स्वयं विहितः परिश्रम इति । एतमेव प्रकार'मेकलव्यप्रणाली'त्यपि शक्यते वक्तुम् ।

**करमर्दिका :** कण्ठशक्तिः, परिष्कृतं सुव्याकृतं चोच्चारणम्, स्वर-परिचयः, लयतालादिवस्तुपरिज्ञानं चेति । तत्र कण्ठशक्तिस्ते शोभना, मनोज्ञमुच्चारणम् । तस्मात्त्वरितमेव ते संगीतविद्या फलिता भविष्यति ।

**कपित्थकः :** अम्ब, त्वया शिक्षितं किं संगीतकम् ?

**करमर्दिका :** न शिक्षितं वत्स ! शैशवे सर्वथा साधनविहीना आस्म वयम् । संजातेषु साधनेषु दृष्टिः सङ्गीतनिबन्धना नोदिताऽऽसीत् । अथ यदा साधनानि सन्ति, दृष्टिरप्युदिता वर्त्तते, तदा नाम वयो नास्ति । तस्मान्मम संगीतशिक्षणं नैव प्रत्यपद्यत ।

**कपित्थकः :** अम्ब, वयो नास्तीति किम्भण्यते ?

**करमर्दिका :** वत्स, सुकुमार एव वयसि शिक्षितं संगीतं श्रियम्पुष्णाति । सुकुमारं खलु ते वयः । मामकन्तु स्थविरं वयः । किमेतस्मिन् वयसि संगीतं शिक्षित्वा करिष्यामि ? स्वीकृतेऽपि सुमहत्यायासे कण्ठस्य नमनीयत्वाभावाद् विद्येयं न तथाधिगता भविष्यति मम, यथा विनाऽपि महता परिश्रमेण त्वमिमामधिगन्तुं शक्नोसि । तस्मादेव त्वमेवमुच्यसे ।

**कपित्थकः :** परमम्ब, त्वदीयमपि कण्ठलावण्यमनन्यसाधारणम्[1] । तर्हि त्वमेवं कस्माद् ब्रूषे ?

**करमर्दिका :** (विहस्य ।) मदीये कण्ठे लावण्यमिति कथं जानासि ?

**कपित्थकः :** अनेककृत्वस्त्वमेकान्तं विलोक्यात्मन्येवात्मना तुष्टा गायसि । तदा तानि गीतानि कियन्ति कर्णमधुराणि हृद्यानि

---

१. अत्र 'कण्ठलावण्यमि'ति पाठः प्रामादिक इति केषाञ्चिन्मतम् । तेषां मते 'कण्ठमाधुर्य'मिति पाठः समीचीनः ।

च प्रतीयन्त इति नैव शक्यते वक्तुम् ।

**करमर्दिका :** अगृहीतसंगीतशास्त्राणां गीतचेष्टा सा । तत्र किमस्ति श्रुतिमनोहरत्वम् ?

**कपित्थकः :** नैवं वक्तुं युज्यते । 'लावण्ये सति कण्ठस्य किं स्याच्छास्त्रनिषेवणैः ? लावण्येऽसति कण्ठस्य किं स्याच्छास्त्रनिषेवणैः ?' इत्येव मदीया बुद्धिर्मां वक्तुं व्यवसाययति ।

**करमर्दिका :** सत्यं वदसि । अन्तरेण कण्ठलावण्यं संगीतं नास्ति । अतीव सुललिताल्लावण्यपरिपूर्णाच्च कण्ठमाध्यमादारोहावरोहरूपा या स्वरधारा बहिर्निःसरति सैव श्रोतृ्णां हृदयानन्दं जनयति । नान्या । तथापि शास्त्रेणोपस्कृताः शब्दसुन्दरगिरः सुवर्णे सुगन्धस्याधानं कुर्वन्तीति नात्र सन्देहः ।

**कपित्थकः :** अम्ब, केषांचित्कण्ठे माधुर्यं निवसति केषांचित्कण्ठे च तस्य नितरामभावो लक्ष्यते । किमेतस्य कारणम् ?

**करमर्दिका :** कण्ठलावण्यं केषांचित्साहजिकं केषांचिच्चार्जितमिति द्विविधं तन्निगद्यते । तथापि येषां जीवितमसंयताचारेण नास्ति निर्भिन्नं तेषामेव तत्सुरक्षितं तिष्ठति । ननु वक्तव्यं संयमस्य परिणामः कण्ठलावण्यमिति । तस्मात्सङ्गीतशास्त्राभ्यासिभिः संयमो नैव कदापि हातव्यः । गृहीतसङ्गीतशास्त्राणामपि दुष्टाचारः संगीतस्य फलवत्त्वं हिनस्ति । दुष्टाचाराणां कण्ठस्य सौकुमार्यं शक्तिश्च द्रागपयाति । एतस्मादेव केषाञ्चिन्मतमिदं यद् वयः परिणतम्भवेदपरिणतं वा येऽपि कण्ठलावण्यविरहितास्ते सर्वे त्यक्तसंयमाः, दुराचारा इति स्पष्टं बोद्धव्यमिति । इदं भूतार्थत्वेन स्वीक्रियेत चेद् ये साध्वाचारास्तेषां कण्ठे माधुर्यं

निवसति ये चासाध्वाचारास्तेषां कण्ठे माधुर्यस्य नितरामभाव इति नियमः कर्त्तुं शक्यते ।

**कपित्थकः** : अम्ब, सङ्गीते किम्प्रधानम् ?

**करमर्दिका** : इदानीमेवोक्तोसि कण्ठलावण्यम्प्रधानमिति । तत्पुनः कस्मादयम्प्रश्नः ?

**कपित्थकः** : प्रश्नस्येदं कारणम् । बहवः संगीताचार्याः संगीतस्यानुष्ठानं कुर्वन्ति । परं तेषां तदनुष्ठानं नैव मनोहरं जायते । किन्तु कदाचित्कदाचित्काचन बाला सुकुमारेण कण्ठस्वरेण तदेव संगीतमनुतिष्ठति । तच्च नितान्तं श्रवणमनोहरम्प्रतिभाति । क्वचिच्च शास्त्रनियमानुल्लङ्घ्यापि कृतं संगीतानुष्ठानं चेतोहरं जायते । अथाऽहं पृच्छामि संगीतशास्त्रनियमानां सर्वात्मना परिपालनम्प्रधानमुत क्वचिदुल्लङ्घितेष्वपि तेषु वीतचिन्तीभूय श्रोतॄणां हृदयेषु रसोत्पादनम्प्रधानम् ?

**करमर्दिका** : शृणु वत्स, शास्त्रज्ञैः स्वसामर्थ्यानुसारं स्वरप्रवृत्तेरनुशीलनं विधाय संगीतस्य केचन नियमाः स्थिरीकृताः । ते कालत्रयेणाऽप्यपरिवर्त्तनीया इति नैव केनापि प्रतिज्ञातुं शक्यते । तस्मादधिकतररसोत्पादकत्वं परिज्ञाय यदि कैश्चित्तेषु नियमेषु किंचित्परिवर्त्तनम्परिवर्धनं वा विहितं तर्हि तत्पूर्वाचार्यस्मृतानां नियमानामुल्लङ्घनं संजातमिति नैव मन्तव्यम् । पुनश्च, श्रोतृहृदयानन्दनं येन जायते तदेव संगीतस्य संगीतत्वम् । शास्त्रनियमपरिपालनेनापि चेल्लोकस्य हृदयानन्दनं नैव जायेत तर्हि किन्तेन संगीतेन ? अतिमात्रमायासितस्य केषांचित्संगीताचार्याणां कण्ठस्यापि स्निग्धत्वाभावः क्वचित् श्रुतिगोचरो भवति ।

अस्निग्धकण्ठोत्थिताः स्वराः कथं मनोहराः संजायेरन् ? तस्माद्रसोत्पादकत्वानुकूलायाः स्निग्धकण्ठतायाः प्राधान्यम् ।

**कपित्थकः** : अम्ब, संगीतशिक्षणस्य किम्फलम् ?

**करमर्दिका** : इतरेषां श्रोतृणां हृदयगतस्य विषादस्यापनोदनम्फलम् । ततोऽप्यधिकमात्मानुरञ्जनम्फलम् । संगीतानुष्ठानेन सर्वतः प्रथममनुष्ठातुरात्मन एवानुरञ्जनं जायते । तदनु च परेषाम् । एतद्धि परेषां चित्तानुरञ्जनमानुषंगिकम् ।

**कपित्थकः** : कदाचिदेवमपि सम्भवति किं यदनुष्ठातुश्चित्तानुरञ्जनन्तु जायेत परं परेषां श्रोतृणां तन्न जायेतेति ?

**करमर्दिका** : सामान्यतया नैव सम्भाव्यमेतत् । तथापि जगति किं नाम तद् यन्नैव सम्भाव्यमिति प्रतिज्ञातुं शक्येत ? 'भिन्नरुचिर्हि लोक' इत्येष नियमो बलीयान् । मनोहरं सुश्राव्यमपि संगीतवस्तु केषाञ्चिद्रुचिं नैवावहति । तत्र संगीतानुष्ठानस्य को दोषः ? तथापि रसोत्पत्तिरुभयनिष्ठा भवति । वस्त्वपि रसोत्पादन-गुणोपेतम्भवेच्छ्रोतुश्चित्तमपि तदास्वादग्रहणगुणोपेतम्भवेत् । तदैव संगीतम्फलति रसोत्पत्तिश्च जायते । एतयोरेकतरस्यापि विगुणत्वे रसोत्पत्तिरशक्यसम्भवा ।

अथैतदेव पश्य । केचन शुद्धशास्त्रीयसंगीतश्रवणप्रिया भवन्ति । केचन सरलशास्त्रीयसंगीतश्रवणप्रिया भवन्ति । केचन च केवलं सरलसंगीतश्रवणैकमात्ररुचयो भवन्ति । तस्माद्यस्य यत्प्रियं, तस्य तदेव मनोहरम्भविष्यति; नान्यत् । एवं नाम यदि प्रवृत्तेऽपि श्रोत्रमनोहरे संगीते, सञ्जातेऽपि तदनुष्ठातु-श्चित्तानुरञ्जने, कस्यचिदपि श्रोतुश्चित्तं नैवानुरज्येत तर्हि

तत्र किमाश्चर्यम् ?

**कपित्थकः** : संगीतेनान्यर्तिक-किं जायते ?

**करर्मर्दिका** : आनन्दो जायते । चित्तस्यैकतानत्वं जायते । प्रतिकूलानुभूतेर्विस्मरणं जायते । एवञ्चापि सौन्दर्यस्य वर्धनं जायत इति मदीयं मतम्भवति ।

**कपित्थकः** : संगीतेन सौन्दर्यवर्धनं जायत इति तु प्रथमतः शृणोमि । केचन संगीताचार्याः संगीतसमये तादृशं मुखमुद्राविकारं जनयन्ति येन चित्तं जुगुप्साभिभूतं संजायते । तत्कथमेतत्त्वदुक्तेन संगच्छते ?

**करर्मर्दिका** : नूनमेवमवलोक्यते । परमयं मुखमुद्राविकारः सङ्गीतशास्त्रे गुणत्वेन नैवाभ्युपगम्यते । यदपि विकारमयं जुगुप्सितं च तत्सर्वं वैगुण्यमेव । एतच्च तेषामेव संजायते, येषां वैयक्तिकमाचरणं विप्रतिपन्नम्भवेत् । साधुस्वभावानां सुचरितानां च जनानां नायं विकारः संजायते। साधुस्वभाववतां मुखमुद्रा नितरां मनोहरा, नयनरमणीया, सुप्रसन्ना च भवति । तस्यां संगीतानुष्ठानेन आह्लादातिशयोद्भवो निर्मलः सात्त्विकश्च सौन्दर्यप्रकाशो विराजते । क्वापि सङ्गीतानुष्ठात्रीणां नारीणां सुकोमलदशनच्छदपट्टपरिचालनश्रमोष्मणा तत्रैव समुद्भिन्नः सुसूक्ष्मस्वेदाम्बुकणसमुच्चयः पद्मपत्रस्थितं तोयमिव मुक्ताफलश्रियं धत्ते, येन तासां निसर्गमनोहरं वदनरामणीयकमितोऽप्यधिकतरं श्रोतृजननेत्राकर्षणम्पुष्णाति ।

**कपित्थकः** : अम्ब, 'सङ्गीतानुष्ठात्रीणां नारीणामि'ति कस्मादेष विषयपर्यवच्छेदः ? यासामपि निसर्गप्रसाधितं सुललितं स्वस्थं

सुमधुरम्मुखमण्डलं, तासां सर्वासामेवैष सुकोमलः स्वेदजलकणोद्भेदः सर्वास्वप्यवस्थासु रामणीयकं द्विगुणयति। एतस्य हि स्वेदस्य रमणीमुखमण्डनत्वे प्रमाणमिदम्भारवेर्वचः—

"कान्तानां कृतपुलकः स्तनान्तराले
वक्त्रेषु च्युततिलकेषु मौक्तिकाभः।
सम्पेदे श्रमसलिलोद्गमो विभूषां
रम्याणां विकृतिरपि श्रियं तनोति।"

एवमेव—

"समानकान्तीनि तुषारभूषणैः
सरोरुहैरस्फुटपत्रपंक्तिभिः।
चितानि घर्माम्बुकणैः समन्ततो
मुखान्यनुत्फुल्लविलोचनानि च।"

इत्यनेनाप्येतदेव ध्वनितं भवति।

**करमर्दिका**: युक्तमेव त्वदीयमुक्तमेतत्। नूनं सार्वत्रिकमेव स्वेदस्य रमणीमुखमण्डनत्वम्। तथापि सङ्गीतवेलायां कमप्यनितरनिर्विशेषं विशेषं पश्याम्येतस्य। एवं हि नाम, सङ्गीतानुष्ठात्रीणां किमस्ति तद्यन्नैव शोभामावहति तस्यां वेलायाम्? तासां सुकुमारं गात्रं, साधीयसी वस्त्रभूषा, सुरुचिरः केशसंस्कारः, मृगीणामिवाबोधभावं व्यञ्जयती नेत्रे, अभिरामदर्शन आसनबन्धः, लीलया पार्श्वोपलालितस्य तानपूरकस्य तन्त्ररेखासु तत्कालसहजहार्दिक्योद्रेकललितशिथिलेन कलितकरांगुलीपरामर्शप्रणयेनोत्पाद्यमानः सुमधुरो झाङ्कारनिर्झरः, चित्तवृत्तेरैकाग्र्यम्, सुस्निग्धमदिरकण्ठस्वराणामुद्गिरणविभ्रमः, अधरद्वयस्य च सुरम्यं शफरस्फुरणम्,

तत्रत्ये च मुहुर्मुहुर्गानश्रमानुरोधाद्दशनदंशनभूमितामभिप्राप्ते सौकुमार्यव्यञ्जकतया च कदाचित्सुवर्तुलं सुदृढं च समाकृष्यमाणे परिपुष्टोत्तरौष्ठपट्टगतसुरेखसम्मोहननिखातभागे[1] स्वर्णकारजटिता मुक्ताकणगणा इव झलझलायमाना इमे स्वेदबिन्दवः—हन्त, कीदृशीमपूर्वतामातनोत्येष समस्तो नादविद्युद्रसतरङ्गहेलायितः सौन्दर्यसिन्धुराशिः ! 'न शक्यते वर्णयितुं गिरा तदा, स्वयन्तदन्तःकरणेन गृह्यते' इति यदुच्यते तस्य याथार्थ्यन्तत्र प्रतिपदं स्फुटताम्प्रतिपद्यते ।

**कपित्थकः** : (विहस्य ।) एतेन तावत्त्वद्वचसा त्वदीयो न केवलं सङ्गीतनिबन्धनः स्वजातिनिबन्धनोऽपि पक्षपातातिशयो द्योत्यते । नैव किम् ?

**करमर्दिका** : (विहस्यैव ।) पक्षपातातिशयस्य स्थाने अनुरागातिशय इति वचनं सुवचम्भवेत् । वर्त्तते नाम मदीयोऽनुरागस्तथाविधः । स्वीक्रियते ।

**कपित्थकः** : अथ सङ्गीतं केवलं नारीणामेवाभ्यासविषयः कस्मान्न भवेत् ? सामान्यतया ताभिरेव कृतं सङ्गीतकमधिकमाह्लादजनकमनुभूयते ।

**करमर्दिका** : पुरुषैरप्यनुष्ठितं संगीतमाह्लादं जनयति । संगीतस्योपस्थापनं समीचीनं यैरपि कृतं स्यात्, तेषामेव संगीतं मनोहरम्भवेत् । उपस्थापकः कश्चनापि भवतु । पुरुषो वा नारी वा । एतस्मा-

---

१. नासिकाया अधस्तादुत्तरौष्ठमध्यगतो यो गर्त्तकल्पो भागः, स एव शरीररचनाशास्त्रज्ञैः 'सम्मोहननिखात' इति निगद्यते ।

दिदम्पुरुषाणामप्यभ्यासविषयो भवितुमर्हति । न तत्र कञ्चन विशेषम्पश्यामि ।

**कपित्थकः** : अम्ब, अथाहमपि संगीताभ्यासमवश्यं करिष्यामि । तर्हि किं श्वः प्रभृत्येवैतस्यारम्भो विधातव्यः ?

**करमर्दिका** : अवश्यं विधातव्यः । त्वद्भगिनी पद्मकर्कटी यत्र संगीत-शिक्षायै गच्छति, तत्रैव त्वमपि गन्तुमर्हसि ।

**कपित्थकः** : सौभाग्यवत्या मृणालमूलिकायाः समीपे—नैतत् ?

**करमर्दिका** : बाढम् । **(पुरतो विलोक्य ।)** हन्त, मध्याह्नोत्तरकालिकस्य कामरूपिकाकषायग्रहणस्य वेलां विज्ञाय सर्वेऽपि गृहवासिन इत एवाभिवर्त्तन्ते । तदागच्छ तदर्थमावामपि गच्छावः ।

**(इति निष्क्रान्तौ ।)**

इत्येकादशः संवादः ।

(ततः प्रविशति गृहीतपेटीवाद्यः[1] संगीतप्रयासरतः परिव्याधकः ।)

अत्र गीतम् ।—

पाहि माम् ।
मनसिजजयने, घनकचचयने,
अयि, नवकुवलयदललोचने,
कलमधुराक्षरसंवलिताधरपुटयुगमधुमोचने !
पाहि माम् ।। ध्रुवम् ।।

(ततः प्रविशति तज्जनकः कर्णिकारः ।)

**कर्णिकारः** : परिव्याधक, किं विधीयते त्वया ?

**परिव्याधकः** : सङ्गीतस्य प्रयासो विधीयते ।

**कर्णिकारः** : अद्य तावदनध्यायस्य दिवसो वर्त्तते । अद्यापि किमेतेन प्रयासेन ? गच्छ । त्वदीयैः सहाध्यायिभिः सह क्रीडां कुरु ।

**परिव्याधकः** : प्रातरेवाद्य तैः सह क्रीडार्थं गतः । परं नहि कोऽप्युपालभ्यत ।

**कर्णिकारः** : किं सञ्जातन्तेषाम् ?

**परिव्याधकः** : सर्वे कुत्रापि भ्रमणार्थं गताः श्रूयन्ते ।

---

१. पेटीवाद्यम् = 'हार्मोनियम्' इत्यांग्लभाषायाम् ।

**कर्णिकारः** : तर्हि त्वं कस्मान्न गतः ? किम्भ्रमणं नैव रोचते तुभ्यम् ?

**परिव्याधकः** : भ्रमणादपि पठनं, पठनादपि च संगीतप्रयासोऽधिकं रोचते मह्यम् ।

**कर्णिकारः** : क्रीडनं नैव रोचते ?

**परिव्याधकः** : तन्नैव रोचते ।

**कर्णिकारः** : बाल्य एव कोऽयन्ते वार्द्धक्यावतारः ? क्रीडाकालेऽप्यक्रीडनं बालानां नितरामसाम्प्रतम् । केनोपदिष्टोऽस्यनध्यायदिवसेऽपि पठनाऽऽयासमेव स्वीकर्त्तुम् ?

**परिव्याधकः** : (**सस्मितम्।**) सङ्गीतप्रयासः पठनमिति नैव वक्तुं शक्यते । सोऽपि क्रीडाया एव स्वरूपान्तरम् ।

**कर्णिकारः** : परमीदृशी क्रीडा बालानां कृते नैव समर्थनीया भवति । यया क्रीडया शरीरावयवसञ्चालनं स्याद्, यथा—धावनमुत्प्लवनं कूर्दनमित्यादि, सा नाम क्रीडा । सैव बालेभ्यः समर्थ्यते । एकमेव स्थानमाश्रित्य विहितः प्रयासो नैव तावान् हितप्रदः ।

**परिव्याधकः** : अथ केन सह क्रीडा विधेया ? नैव कश्चनापि दरीदृश्यते ।

**कर्णिकारः** : अथ श्रीवारकः क्व गतः ? पुष्पसिता क्व गता ?

**परिव्याधकः** : मात्रा सह तावुभावपि विपणिं गतौ स्तः ।

**कर्णिकारः** : त्वं कस्माद् गृह एवातिष्ठः ? कस्मान्न तैरेव साकं त्वमप्यगच्छः ?

**परिव्याधकः** : भवतः पार्श्वे विष्कम्भस्योद्घाटनी नासीदिति मात्राहमत्रैव भवदागमनप्रतिपालनार्थं निर्दिष्टो येन प्रत्यायातस्य भवतो

द्वारोद्घाटनक्लेशो मा भूदिति ।

**कर्णिकारः** : युज्यते । (**खट्वायां समुपवेष्टितेन विष्टरेण स्वकीयं शरीर-पृष्ठं संयोज्य।**) अथ किं सङ्गीतस्य पाठा अपि गृह्यन्ते त्वया ?

**परिव्याधकः** : बाढम् ।

**कर्णिकारः** : कदा प्रभृति ?

**परिव्याधकः** : विगतात्सोमवासरात् ।

**कर्णिकारः** : क्व गम्यते ?

**परिव्याधकः** : सौभाग्यवत्याः कोलशिम्बिकायाः सङ्गीतनृत्यशास्त्रशा-लायामेव ।

**कर्णिकारः** : कोलशिम्बिकायाः सङ्गीतशालायां कति सन्ति शिक्षार्थिनः ?

**परिव्याधकः** : द्वापञ्चाशदिति तर्कयामि । तत्र च बालकानामपेक्षया बालिकानामेव संख्याऽधिका । तत्र हि प्रत्यहमुत्सवविशेष इवा-लोक्यते ।

**कर्णिकारः** : प्रतिदिनं किंवादनात्किंवादनं यावत्तस्याः शालायाः कार्यकालः ?

**परिव्याधकः** : मध्याह्नपूर्वादेकादशवादनान्मध्याह्नोत्तरञ्चतुर्वादनं यावच्छालाकालः ।

**कर्णिकारः** : अस्माकं कार्यनिलयकाल एव युष्माकं शालायाः कार्यकालः तस्माद्वयं तमुत्सवविशेषं नैव द्रष्टुम्पारयामः । एकदा युष्माकं सङ्गीतानुष्ठानं द्रष्टव्यं द्रष्टव्या चात्रभवती कोलशिम्बिकादेवी ।

**परिव्याधकः** : तर्हि कार्यनिलयादेकं दिवसं मोक्षः कस्मान्न गृह्यते ?

कर्णिकारः : गृह्यते नाम कदाचित् ।

परिव्याधकः : अपरेद्युः कोलशिम्बिकादेव्यपि भवन्तं द्रष्टुकामाऽऽसीत् । प्रत्यहं सा भवदीयं कुशलम्पृच्छति ।

कर्णिकारः : कुशलम्पृच्छति ? कथन्तस्या मम नाम्ना संस्तवः ?

परिव्याधकः : भवाँल्लोकभाषाकविरिति सर्वत्र भवतः ख्यातिर्वर्त्तते ।

कर्णिकारः : (सस्मितम् ।) अहं लोकभाषाकविरिति किं कोलशिम्बिकाऽपि वेत्ति ?

परिव्याधकः : न केवलं वेत्ति—भवतः काव्यं सा बाढम्परिचिनोत्यपि । भवत्प्रकाशितं काव्यपुस्तकत्रयं सदैव तस्याः करे तिष्ठति ।

कर्णिकारः : कुतो लब्धानि तया तानि पुस्तकानि ?

परिव्याधकः : मात्रा स्वयम्प्रेषितानि तस्याः पार्श्वे । सा च तानि विलोक्य बहुतरम्प्रहृष्टा । लोकभाषाकाव्यं मह्यं बहु रोचत इति सा कथयति ।

कर्णिकारः : (प्रसादं नाटयन् ।) शोभनम् । किं विधातव्यं—कार्यनिलये साम्प्रतं तादृशं कार्यवैपुल्यं येन मोक्षग्रहणं दुःशकं संजातम् । अन्यथैकदैकं दिवसं मोक्षं गृहीत्वा भवतां सङ्गीतशालाया दर्शनमहमवश्यमकरिष्यम् ।

परिव्याधकः : भवतः पुस्तकेषु प्रकाशितम्भवतः प्रतिच्छन्दकं[1] विलोक्य भवदीयस्याकृतिसौन्दर्यस्यापि प्रशंसाम्भूयसीं करोति ।

कर्णिकारः : ममाकृतिसौन्दर्यस्य प्रशंसां करोति ? कीदृशं ममाकृतिसौन्दर्यम् ?

---

१. प्रतिच्छन्दकः='फोटोग्राफ' इत्यांग्लभाषायाम् ।

**परिव्याधकः** : अनेककृत्वो मया दृष्टं, सा भवदीयम्पुस्तकमुद्घाट्य चिराय तदेकदृष्ट्या भवत्प्रतिच्छन्दकमेव पश्यन्ती तिष्ठति ।

**कर्णिकारः** : केषाञ्चिदित्थं सम्भवति ।

**परिव्याधकः** : एतदेव कारणं यत्सा मयि पुष्पसितायां च भृशं स्निह्यति । अतिमात्रं प्रेम्णा च सर्वमपि सङ्गीतशास्त्रमावाम्पाठयति ।

**कर्णिकारः** : भाग्यवत्तरौ युवाम् । एतेन युवयोः सङ्गीतशास्त्रं द्रागेव फलीभूतम्भविष्यति । प्रेमपरिपूर्णहृदयैरध्यापकैरध्यापिता विद्यैव च्छात्राणां साफल्याय कल्पते । मद्वचनात्कोलशिम्बिकायै निवेदय यन्मह्यमपि सङ्गीतविद्या भृशं रोचते । अतिमात्रं श्रोतुकामोऽस्मि भवदीयं शास्त्रीयं संगीतमिति ।

**परिव्याधकः** : श्वः शालां गत्वा सर्वप्रथममिदमेव निवेदयिष्यामि ।

**कर्णिकारः** : यदि शक्यम्भवेत्तर्ह्यागामिनि रविवासरे गृहमस्मदीयमागमनेन कृतार्थयितव्यमित्यपि निवेदय ।

**परिव्याधकः** : सैवागन्तुकामा वर्त्तते । भवते तस्या आगमनं रोचते न वेत्याशंक्य सा सङ्कोचं करोति ।

**कर्णिकारः** : कः सङ्कोचः ? निःसङ्कोचमागम्यतामिति वक्तव्यम् ।

**परिव्याधकः** : भवति तस्यास्तावान्स्नेहभावस्तथापि न जाने, कस्मात्सा तादृशमागमनसङ्कोचं करोति ।

**कर्णिकारः** : (स्वगतम् ।) प्रेम्णि सर्वथा तादृशमेव भवति । (प्रकाशम् ।) वरं तर्हि कदाचिदहमेव तत्रागमिष्यामि ।

**परिव्याधकः** : अथेदानीं भवान्गृहमागतः । कञ्चित्कालमहं बहिर्गच्छेयम्?

**कर्णिकारः** : गच्छ वत्स, यथेप्सितं स्थानं गच्छ ।

परिव्याधकः : नमस्ते ।

(निष्क्रान्तः ।)

कर्णिकारः : (स्वगतम् ।) नूनं सङ्गीतं काव्यमभिलषति काव्यं च सङ्गीतम् । सर्वथा साहजिक एवानयोः परस्परं स्नेहातिशयः । एष स्नेहातिशय एव स्नेहभाजनेषु विगुणेष्वपि गुणारोपणं करोति । मदीयं प्रतिच्छन्दकं विलोक्य कोलशिम्बिकादेवी मम रूपं सविशेषरमणीयमिति यन्मनसा करोति, तत्र कारणमेतदेव । अन्यथाऽतिमात्रं सामान्ये मदीये प्रतिच्छन्दके किमस्ति तादृशं येन लोकानां चित्तमाकृष्टम्भवेत् ? सर्वथाऽत्र व्यतिकरेऽन्तःकरणगतो निर्व्याजः स्नेहभाव एव प्रभवति । गुणावगुणयोर्घनीभूतं दृढमावरणकवचं विदार्य विशुद्धस्यात्मतत्त्वस्य साक्षात्कारं कुर्वाणाय स्नेहपरिपूरिताय तस्मै मानवीयान्तःकरणाय नमः । (विचिन्त्य ।) किमिदानीं करवै ? अस्तु । अपरस्मिन् कक्षे या प्रत्यग्रक्रीता सरस्वतीवीणा स्थापिता वर्त्तते, तदुपवीणनप्रयासेनैवात्मनश्चित्तं तावदिदानीं विनोदयामि ।

(इति गन्तुमुपक्रमते । अत्रान्तरे प्रविशति तदीया दुहिता पुष्पसिता ।)

पुष्पसिता : बाबा,[१] परिव्याधकः क्व ?

कर्णिकारः : सम्प्रत्येव बहिर्गतः ।

पुष्पसिता : बहिष्टादेव तावदागच्छामि । नाहं तं क्वापि मार्गाभ्यन्तरे व्यलोकयम् ।

कर्णिकारः : गतो भवेदपरत्रैव कुत्रापि । किमस्ति प्रयोजनं तेन ? किंचिद् भणिष्यसि न वा ?

---

१. 'तात' इत्यर्थकं देशजं सम्बोधनपदम् ।

**पुष्पसिता** : भणिष्यामि बाबा ! इदानीमेव विपणिं गतायामम्बायां किं नाम—तत्रभवती कोलशिम्बिकादेवी नानाविधवस्तुपरिक्रय-परायणा दृष्टिपथमुपयाता । बाबा, अद्य हि तस्याः संगीत-शालायां किं नाम—महाकालिकापत्तनात्, मुम्बापत्तनात्, षण्मुख-पत्तनात्, पुण्येश्वरपुरात्, गोपालपुरात्, लक्ष्मणपुरात्, प्रयाग-नगरात्, भाग्यवतीनगरात्, पाटलिपुत्राच्च बहवो धुरन्धराः संगीता-चार्याः समागताः सन्तीति सा मातरमसूचयत् । तत्र महानिव कश्चित्सङ्गीतकमेलको भावीति भण्यते । तदेतत्सुप्रियं वृत्तं भवन्तं परिव्याधकं च विज्ञापयितुमेवात्र ससम्भ्रमा समायाताऽस्मि ।

**कर्णिकारः** : किमस्माभिरपि गृहजनैस्तत्रागन्तुं शक्यते ?

**पुष्पसिता** : बाढं बाबा ! (**नेपथ्याभिमुखं विलोक्य ।**) बाबा, तत्रा-वलोक्यताम् । तत्रभवती कोलशिम्बिकादेवी तावदत्रैव सम्प्राप्ताऽम्बया सह । तदागच्छतु भवान् । आवां तामेव प्रत्युद्गच्छावः ।

**कर्णिकारः** : (**स्वगतम् ।**) तर्हि वक्तव्यं फलितं नाम मदीयेन चिर-संवर्धितेन मनोऽभिलाषेणेति । (**प्रकाशम् ।**) बहु साधूक्तम् । चल तावत् ।

(**इति तावुभावपि निष्क्रान्तौ ।**)

इति द्वादशः संवादः ।

**(ततः प्रविशत्यासनस्थो मकरन्दकः ।)**

**मकरन्दकः :** **(स्वगतम् ।)** अद्य स्वप्ने मन्दारमाला दृष्टा । न वेद्मि कस्मान्मदीयमिदं मनस्ताम्प्रति बहुभ्यो दिवसेभ्यः प्रह्वीभावमनुभवतीव । सा संगीतं वेत्ति । तस्याः कण्ठलावण्यं सर्वथाऽवर्णनीयम् । न केवलं कण्ठलावण्यं रूपलावण्यमपि तस्यास्तथाविधमेव । तां द्रष्टुं कोऽप्यवसरो लप्स्यते किमेतस्मिन्नायुषि ? हन्त, यद्वस्तु स्वप्ने दृष्टं तत्कदाचिद्वास्तविके व्यवहारजगत्पीठकेऽवतारमपि[1] धारयिष्यति वा ? हन्त !...

**(अत्रान्तरे गृहद्वारस्थे पिनद्धे कपाटे नखाघातकृतो घट्टनध्वनिः श्रूयते ।)**

**मकरन्दकः :** **(द्वारदेशमुपसृत्य ।)** कः कोऽत्र ?

**(नेपथ्ये नारीकण्ठः ।)**

अपि नामेदमेव गृहं कुसुमकर्णिकायाः ?

**मकरन्दकः :** बाढम्-बाढम् । का पुनरत्रभवती ?

**(नेपथ्ये ।)**

अहं कुसुमकर्णिकायाः सङ्गीतनृत्यशिक्षिका मन्दारमाला नाम ।

---

१. स्वप्नावस्थायां यद्रूपं जगदवलोक्यते, तत्स्वप्नजगत् । जागर्त्तेरनन्तरं परिदृश्यमानं यद्रूपं जगत्, तदेव 'व्यवहारजगदि'ति विमर्शः ।

मकरन्दकः : (हर्षोल्लासभूयिष्ठम् ।) हन्त, अत्रभवती मन्दारमाला-देवी सम्प्राप्ता ? एष द्वारमपावृतकपाटं करोमि । (तथा कृत्वा ।) स्वागतं महाभागायाः । इदानीमेव भवत्या विषये चिन्तयामि स्म ।

(प्रविश्य ।)

मन्दारमाला : हन्त ! एवं किम् ? मन्ये भाग्यशालिन्यहं यन्मम परोक्षेऽपि भवादृशाः कविसत्तमा मद्विषये किमपि चिन्तयन्ति ।

मकरन्दकः : आस्यतामस्मिंस्तूलासने ।

मन्दारमाला : (करकर्पटेनोत्तरौष्ठपट्टोद्भिन्नान्कांश्चित् सूक्ष्मस्वेदोदबिन्दूनपमार्जयन्ती[1] ।) आस्यते ।

(कंचित्कालमुभावपि परस्परं विलोकयन्तौ मौनं नाटयतः ।)

मन्दारमाला : अथान्ये गृहवासिनः क्व ?

मकरन्दकः : सर्वे बहिर्गताः ।

मन्दारमाला : किं कमपि विलोकयितुं कस्यापि गृहं गताः ?

मकरन्दकः : नहि-नहि । कान्तलकस्तावदिदानीमेव क्रीडनार्थं क्वापि निर्गतः । संवर्तिका वस्तुक्रयार्थं विपणिं गता । कुसुमकर्णिका-पुण्डरीकौ च तयैव साकं गतौ ।

मन्दारमाला : भवतां कृते विपणिरपि बहुदूरे वर्त्तते ।

मकरन्दकः : आ एवमिव । किमपि सौकर्यं किमप्यसौकर्यम् । एतत्तु प्रवर्त्तत एव ।

(पुनः कंचित्कालमुभावपि तूष्णीं तिष्ठतः ।)

मन्दारमाला : साम्प्रतं नूतनं किं लिख्यते ?

---

१. करकर्पटः=करचीवरः । 'हातरूमाल' इति मराठीभाषायाम् । 'हैंडकरचिफ' इत्यांग्लभाषा ।

**मकरन्दकः** : नूतनं नैव किमपि ।

**मन्दारमाला** : भवादृशः कविः किमपि नूतनं नैव लिखतीति नैव विश्वासास्पदम् ।

**मकरन्दकः** : अस्मिन्नायुषि काव्यात्मकं यदपि लेखनीयमासीन्मम, तत्सर्वं पर्यवसितमिव प्रतिभाति । अथ सम्प्रति तावत्केचन संवादाः संस्कृतभाषायां लिख्यन्ते । अपि भवती जानाति संस्कृतम् ?

**मन्दारमाला** : **(विहस्य ।)** संस्कृतभाषायाश्चरमा परीक्षा मयाप्युत्तीर्णा वर्त्तते ।

**मकरन्दकः** : हन्त, चरमा परीक्षोत्तीर्णा भवत्या ? महानयम्प्रसादविषयः । अस्तु । कान्तलकस्य मुखाच्छ्रुतं यद्भवत्या मम काव्यपुस्तकानि पठितानि सन्तीति । तानि किंविधानि प्रतिभातानि भवत्यै ?

**मन्दारमाला** : अतीव रुचिराणि । अहन्तु सर्वदैव तान्यात्मसकाशे स्थापयामि । यदा कदाचिन्मनोगतो व्यथाभारो दुर्वहः संजायते, तदा भवद्विरचितानि गीतानि पठितुमारभे । नूनं तानि गीतानि विरचय्य प्रकाश्य च सुमहानुपकारोऽस्मासु भवता विहितः ।

**मकरन्दकः** : **(सस्मितम् ।)** सङ्गीतशास्त्रस्य परम्पारं गताऽपि भवत्येवमाह ?

**मन्दारमाला** : काव्येन विना किं सङ्गीतस्य ? काव्यस्य दिव्यतमेन स्पर्शेन विरहिता सुकोमलाऽपि स्वरधारा क्षुल्लका[1] शुष्का च प्रतिभाति । सङ्गीतस्य वाद्यतन्त्राणां मध्ये निलीय स्थितं

---

१. क्षुल्लका = क्षुद्रा । क्षुद्रशब्दस्यैव रलयोरभेदत्वेन साधितं कन्प्रत्ययान्तं च रूपमेतत् ।

यदप्यपूर्वं दुर्विज्ञेयं झाङ्कारमयं किञ्चित्तत्काव्यमेव । संगीतस्य चपल: स्वरप्रवाह: काव्यस्य वाहनमात्रमेव । यद् हृदयं स्पृशति, हृदयं हिल्लोलयति, हृदयमान्दोलयति, विलोडयति, समुन्मथ्नाति, हृदयं समूलं कम्पयते तत्काव्यमेव । तेनैव प्राणा रुदन्ति, हसन्ति, हृष्यन्त्यानन्दन्ति च ।

**मकरन्दकः** : वयं काव्यविदः सङ्गीतं स्पृहयामः सङ्गीतविदश्च काव्यं स्पृहयन्तीति नास्ति किमेष व्यतिकरो विस्मयकारकः ? अहन्तावत्काव्यापेक्षयाऽपि सङ्गीतमेवाधिकतरं श्रद्दधे ।

**मन्दारमाला** : **(सस्मितम् ।)** यस्य स्वस्मिन्नेव हृदये काव्यस्य भाण्डागारः, स कथं काव्यं श्रद्धत्ताम् ? ये जना जात्यैव कृपणास्त[1] एव द्रविणं श्रद्दधते । येषां गृहे प्रचुरं स्वापतेयं, तेषां कृते द्रविणं नाम कियती मात्रा ?

**मकरन्दकः** : हन्त, यदपि काव्यस्य विषये भवती प्राह, यत्सत्यं तदेव सङ्गीतस्य विषये मयाऽप्यक्षरशः प्रवक्तुं शक्यते । अस्तु । अद्य भवतीमत्रागतां विलोक्यातीव प्रहृष्यति मे मनः । अनेककृत्वो भवतीं द्रष्टुं भवत्सङ्गीतशालाम्प्रत्यागन्तव्यमित्यभिलाषः समजनि । परं समयाभावात्तन्नैव समभवत् ।

**मन्दारमाला** : अवश्यमागन्तव्यम् । सा तु भवदीयैव शालेत्यालोच्यताम् । यस्मिन्नहनि भवदीयम्पुस्तकत्रयं भवद्भार्यया मत्सकाशे प्रेषितं तद्दिनादारभ्य तीव्रा मे भवद्दर्शनलालसा मामस्वस्थां करोति; परं केनाप्यनिर्वचनीयेन सङ्कोचभारेण विनिवारिता नाहमागन्तुमपारयम् । अद्य मनसः संयमनमशक्यं संजातमिति

१. 'निर्धना' इत्यर्थः ।

सङ्कोचं यथा कथञ्चिदपहाय समागताऽस्मि । (उत्तरौष्ठपट्टोपचितान्मुक्ताकल्पान्स्थूलोज्ज्वलान्स्वेदबिन्दून्पुटीकृतेन[1] करकर्पटेन मध्ये-मध्ये ओखन्ती।) मन्ये ममेदमागमनसाहसं भवते नानुचितप्ररोहमप्रियं वा प्रत्यभादिति ।

**मकरन्दकः** : हन्त, कीदृशमनौचित्यम् ? भवदीयमेवैतद् गृहम् । निशःङ्कं समागन्तव्यम् । ननु वक्तव्यं साक्षात्सङ्गीतविद्यैव भवत्या व्यपदेशेन मद्गेहे पदार्पणं करोतीति । भवतीं स्वगृहावस्थितां विलोक्य चेतः कीदृशीं कृतार्थतामनुभवतीति नैव शक्यते वर्णयितुम् ।

**मन्दारमाला** : भवदीयमेतदुक्तं मां हृष्टगात्रां करोति । हन्त ! कृतार्थास्मि ।

**मकरन्दकः** : अथोच्यतामभ्यागतभावेनास्मद्गृहमागताया भवत्याः केन वस्तुनाऽऽतिथ्यं समाचर्येत ? मम भार्या बहिर्गता वर्त्तते । (**क्षणं विमृश्य ।**) न भयम् । मुहूर्त्तमात्रं स्थीयताम् । अहमिदानीमेव भवदर्थं कामरूपिकाकषायं निष्पाद्य समानयामि ।

**मन्दारमाला** : नहि-नहि । नैवायमायासः करणीयो मदर्थम् । कामरूपिकाकषायं तावद् गृहीत्वैव स्वगृहात्प्रचलिताऽस्मि । तस्मात्पुनस्तद्ग्रहणे नास्ति कापि रुचिः । तत्कष्टं नैव कर्त्तव्यम् ।

**मकरन्दकः** : तत्र कष्टस्य का वार्त्ता ? कामरूपिकाकषाय इति लघ्वी मात्रा । सपद्येव निर्मीयते । अस्माकं तैलज्वालायन्त्रमपि सम्यक्कार्यं करोति साम्प्रतम् । तस्मान्नैव चिन्ता कार्या । भवादृश्योऽभ्यागतभावेन गृहमागच्छेयुरस्माभिश्च साधारणः कामरूपिकाकषायोऽपि तासां सत्कारार्थं नैव पुरस्कर्त्तव्य इति

---

१. पुटीकृतः='तह किया हुआ' इत्यर्थः ।

कथं कस्यापि साधु प्रतीयेत ? कषायनिबन्धनं सामग्रीजातं सर्वमपि सिद्धं वर्त्तते ।

**मन्दारमाला :** भवता विहितेन वार्त्तालापेनैव या मम सम्भावना जायते, सा वर्धमानकप्रमितेन कामरूपिकाकषायेण क्रियमाणायाः सम्भावनाया अपेक्षयाऽप्यधिकतरं मनःसौख्यावहा । तस्मादत्रैव स्थित्वा कृपया मया सहालापः क्रियताम् ।

**मकरन्दकः :** मुहूर्त्तस्यैव प्रतीक्षायासो भवेत् ।

**(इति निर्गतः ।)**

**(नेपथ्ये तैलज्वालायन्त्रस्य भरात्कारध्वनिः श्रूयते ।)**

**मन्दारमाला :** **(स्वगतम् ।)** मकरन्दक, केन दत्तमिदमभिधानन्ते ? कियानिव यथार्थाक्षरः शब्दोऽयम् ? यत्सत्यं त्वं ममैव किं सर्वेषामेव कृते मकरन्दकल्पोऽसि––माधुर्यस्यैकाधिष्ठानम् । **(तूलासनादुत्थाय भित्तिकीलकमवलम्ब्य स्थितं मकरन्दकस्य बृहन्तम्प्रतिच्छन्दकमुपसृत्यावधानपूर्वकं तत्रैव लक्ष्यं बद्ध्वा स्वगतमेव ।)** हन्त, परिपूर्णचन्द्रमसो मण्डलमिव सर्वसौम्यगुणोपेतं ते मुखमण्डलमिदं मम हृदयं बलादिव समाकर्षति । कीदृशी पराधीनाऽस्मि संजाता । एतदेव सौम्यं मुखमण्डलं वीक्षमाणाया ममायुषः शेषोऽपि भागो व्यतीयादिति कोऽपि बलवान्मे हृदयाभिलाषः ! मकरन्दक, कविर्नासि साक्षात्काव्यमेवासि धरामवतीर्णम् ।

**(एकस्मिन्नाधारपात्रे[1] कामरूपिकाकषायग्रहणसामग्रीजातं गृहीत्वा प्रविशति मकरन्दकः ।)**

---

१. आधारपात्रम्='ट्रे' इत्यांग्लभाषायाम् ।

**मकरन्दकः** : (आधारपात्रं कक्षमध्यवर्त्तिनि लघुस्तम्भफलके संस्थाप्य ।) आगम्यताम् । गृह्यतां कषायः ।

**मन्दारमाला** : (विहस्य ।) एवम् ? झटित्येव निर्मितः कषायोऽपि । वर्णनीयं खल्विदम्पुरुषाणामीदृक्कषायनिर्माणकौशलम् ।

**मकरन्दकः** : (सस्मितम् ।) आदौ तावदास्वाद्यताम् । तदनु निवेद्यतां नाम कुशलतया निर्मितोऽकुशलतया वेति ।

**मन्दारमाला** : अथ शिष्टं मेलनकार्यं मया करिष्यते । (इति स्वयमग्रतो भूत्वा कषायपानीयेन सह दुग्धादिकं मेलयितुमारभते ।) अथ कतिचमसमितश्चन्द्रद्युतिर्गृह्यते[1] ?

**मकरन्दकः** : 'चन्द्रद्युतिः' ? भवत्या अभिप्रायः 'सितशर्करा' किम् ?

**मन्दारमाला** : (सस्मितम् ।) नैव ज्ञायते शर्करायाः कृते शार्ङ्गधरसंहितायां प्रयुक्तः शब्दोऽयं 'चन्द्रद्युति'रिति ?

**मकरन्दकः** : मदर्थं नूतनः शब्दोऽयम् ।

**मन्दारमाला** : 'खण्डस्य चन्द्रद्युते'रिति तत्रत्ये रसालानिर्माणप्रकरणे प्रयोगो दृश्यते । तत्र खण्डस्य[2] विशेषणत्वेन प्रयुक्त एवायं चन्द्रद्युतिः शब्दो मया विशेष्यत्वेन स्वीकृतः । अर्थावहः शब्दः खल्वयम् ।

**मकरन्दकः** : शब्दशास्त्रेऽपि भवत्या गतिर्दृश्यते ।

**मन्दारमाला** : अस्तु । निवेद्यतामादौ कतिचमसमितश्चन्द्रद्युतिर्भवतो वर्धमानके पातनीयः ।

---

१. चन्द्रद्युतिः='चीनी' इति लोकभाषायाम् ।

२. खण्डः='खांड' इति भाषायाम् ।

**मकरन्दकः** : किमत्र प्रष्टव्यम्भवति ? यावान् भवत्या गृह्यते, तावानेव भवतु ।

**मन्दारमाला** : मया तावदेकस्मिन्वर्धमानके सार्द्धचमसद्वयमितश्चन्द्रद्युतिर्गृह्यते ।

**मकरन्दकः** : अम्मो, तावाँश्चन्द्रद्युतिः ? तावता त्वपायस्य सम्भवः । अधिकादधिकं सार्द्धैकचमसमितः पर्याप्तो भविष्यति ।

**मन्दारमाला** : चन्द्रद्युतिप्रिया खल्वहम् । एकस्मिन्कषायवर्धमानके चमसत्रयमितश्चन्द्रद्युतिरपि निक्षिप्येत नाम तेनापि मे रुचिवैकल्यं नैव जायेत ।

**मकरन्दकः** : आश्चर्यम् । मह्यन्तावदधिकश्चन्द्रद्युतिर्नैव रोचते ।

**मन्दारमाला** : **(यथाविधि कषायम्परिनिष्ठाप्य वर्धमानकयोर्निक्षिपति ।)** अथ गृह्यतामयं कषायवर्धमानकः ।

**(इत्युभावपि कामरूपिकाकषायमास्वादयतः ।)**

**मकरन्दकः** : कीदृशः कषायः ?

**मन्दारमाला** : फक्कडः[1] । पुरुषोऽपि सन् कषायं शोभनं साधयति भवान् ।

**मकरन्दकः** : न केवलं कषायं, सर्वानपि पाकप्रकारान् मम भार्याया अप्यधिकतरं कौशलेन साधयामि ।

**मन्दारमाला** : **(मधुरं स्मयते ।)**

**मकरन्दकः** : अवदंशस्य[2] प्रबन्धो नैव संजात इति खिद्यते मनसा ।

---

१. 'अतिमात्रम्प्रशंसनीय' इत्यर्थसूचको व्युत्पत्तिविरहितः शब्दः ।

२. कषायादिपेयैः सार्धं भक्षणार्थं किमपि 'बिसकुट्टा'दिकं प्रस्तूयते, तदेवाऽत्र अवदंशशब्देनाऽभिप्रेतमिति बोद्धव्यम् । 'Snacks' इत्यांग्लभाषायाम् ।

**मन्दारमाला** : नैव खेदः कर्त्तव्यः ।

(उभयोः कषायग्रहणं समाप्यते ।)

**मकरन्दकः** : मुहूर्त्तम्प्रतिपाल्यताम् । कषायधान्यादिकं पाककक्षे निधायैष प्रत्यागच्छामि ।

**मन्दारमाला** : भवान्किमर्थमिदं कष्टं स्वीकरोति ? अहं स्थापयामि सर्वमप्येतत् । नारीणामेष एव सदातनः कार्यक्रमः ।

**मकरन्दकः** : अभ्यागतैर्यजमानस्य गृहकार्यं नैव समाचरणीयम् । किमस्ति कष्टजातं क्षुल्लकेऽस्मिन्निधानकर्मणि ? (इत्याधारपात्रे सर्वमपि कषायग्रहणसामग्रीजातं निधाय पाककक्षं प्रति निर्गच्छति ।)

**मन्दारमाला** : (स्वगतम् ।) अहो मधुरः स्वभावः ! मधुरा रूपाकृतिः, मधुरं यौवनं, मधुरो व्याहारो, मधुरश्च व्यवहारः । किमस्य तद्यन्मधुरं नास्ति ? सर्वथा मामेष स्वायत्तां करोति ।

(प्रत्यागत्य ।)

**मकरन्दकः** : हुम् । इदानीमुच्यतां कोऽन्यो विशेषः ? (इत्यासनं गृह्णाति ।)

**मन्दारमाला** : (सभावपारवश्यम् ।) मकरन्दक, किं वच्मि ? परवानेष जनः । नाहमात्मानं निवारयितुं शक्नोमि भावपारवश्यात् ।

**मकरन्दकः** : (सस्मितम् ।) त्रयाणामपत्यानाम्पिता एकस्याश्च भार्याया भर्त्ताऽहम् । मम विषये कीदृशमत्रभवत्या भावपारवश्यम् ?

**मन्दारमाला** : अहमपि द्वयोरपत्ययोर्जननी एकस्य च भर्त्तुर्भार्या । तथापि भवन्तं विलोक्य सर्वात्मना भवदीयैव संवृत्ताऽस्मि । कमत्र प्रत्युपायम्भवानुपदिशति ?

**मकरन्दकः** : कः प्रत्युपायः समुपदिश्येत ?

**मन्दारमाला** : 'विचित्ररूपाः खलु चित्तवृत्तय' इति यदुच्यते, तत्सर्वथा सत्यम् । किमहमेकम्पृच्छेयम् ?

**मकरन्दकः** : सविस्रम्भम्पृच्छ्यताम् ।

**मन्दारमाला** : भवतोऽपि किन्तादृश एव मयि स्नेहबन्धः ?

**मकरन्दकः** : अनिर्वचनीयः स्नेहबन्धः ।

**मन्दारमाला** : (**स्वासनादुत्थाय मकरन्दकमुपसृत्य सरोमाञ्चगद्गदम् ।**) दयित, कीदृशमिन्द्रजालम्प्रसार्य भावदुर्बलामाबध्नासि माम् ? एषा नाहम्पारयाम्यात्मानं निवारयितुम् । (**इति बाहुभ्यां मकरन्दकमावेष्टयति ।***) इच्छा तावदीदृशी संजायते यत्त्वदीयं कृत्स्नमप्यस्तित्वं त्वत्तः समाच्छिद्यैवं स्ववक्षसा संसज्य त्वां दिवानिशमात्मसकाशमेव धारयेयमिति । (**इति निबिडपीवराभ्यां स्तनकुम्भाभ्यां गाढमाश्लिष्य विपुलं स्विद्यमानाभ्यामधराभ्यां मकरन्दकस्य वक्त्रं चुम्बितुमीहते । एतस्मिन्नेवान्तरे कक्षद्वारकपाटघट्टनध्वनिः श्रूयते । साध्वसपरिगृहीता मन्दारमाला सकृदेव निर्भरं निःशब्दं च चुम्बनास्वादमनुभूय झटात्कारेण पृथग्भूता स्वकीयं तूलासनं समाश्रयति ।**)

**मकरन्दकः** : (**द्वारदेशमुपसृत्य सुप्रशान्तेन वचसा ।**) कः ? संवर्तिका ?

(**इति द्वारमुद्घाटयति ।**)

(**ततः प्रविशति मकरन्दकभार्या संवर्तिका, दुहिता कुसुमकर्णिका, सुतः पुण्डरीकश्च ।**)

**संवर्तिका** : (**दीर्घं निःश्वस्य ।**) अद्य प्रभूतः क्रथः संजातः ।

**कुसुमकर्णिका** : (**मन्दारमालां वीक्ष्य सहर्षम् ।**) अम्मो, माननीया मन्दारमालादेव्यप्यत्रैव तिष्ठति । (**इति तस्याः क्रोडे निपतति ।**)

---

*'स्त्र्यारब्धः शृङ्गारोऽधम' इत्याचार्यो वे. राघवः ।

**पुण्डरीकः** : (मन्दारमालामुद्दिश्य।) नमोऽत्रभवत्यै ।

**संर्वातिका** : (मन्दारमालां विलोक्य सस्मितम्।) समीचीनम् ! अत्रभवती कदा समायाता ?

**मन्दारमाला** : कश्चिदेव कालः समायातायाः ।

**संर्वातिका** : 'अद्यायास्यामि', 'श्व आयास्यामी'ति कारं-कारमेकदा नाम समायाताऽत्रभवती गृहं कृतार्थयितुम् । स्वागतमस्तु ।

**मन्दारमाला** : प्रभूतः क्रयायासः स्वीकृतोऽद्य ?

**संर्वातिका** : बहुतरं क्रेतव्यमासीत् । पुष्कलेभ्यो दिनेभ्यः क्रेतव्यं क्रेतव्यमिति मनसि कृत्वाऽद्य कुतश्चित्कश्चिदवकाशो लब्धः क्रयकार्यस्य ।

**मन्दारमाला** : किं-किं क्रीतं दृश्यताम् !

**संर्वातिका** : अत्रभवत्यपि पश्यतु । (इति वस्तुगर्भं वस्त्रप्रसेवकं गृहभूमाववाङ्मुखं कृत्वा विस्तार्य च तत्रैव सर्वाण्यपि क्रीतवस्तूनि ।) इमाः काञ्चनोर्णासूत्रमुष्टयः । आसां वर्णस्य विषये किं मतम्भवत्याः ?

**मन्दारमाला** : (ता मुष्टीरुत्थाप्य स्वहस्ते समादाय ।) एतेन कान्तलकस्योत्तराङ्गकः सम्यक्सन्तानितो भविष्यति । शोभनो वर्णः ।

**संर्वातिका** : (अन्या मुष्टीरुत्थाप्य दर्शयति ।) इमाः कीदृश्यो भविष्यन्ति ?

**मन्दारमाला** : इमाः कस्यार्थम् ?

**संर्वातिका** : कुसुमकर्णिकार्थम् ।

**मन्दारमाला** : (सम्यक्परीक्ष्य ।) विलोभनीयमूर्णासूत्रम्—वर्णश्च । बहुशोभन उत्तराङ्गको भविष्यति ।

**मकरन्दकः** : मदर्थमपि कानिचिद्वस्त्राण्यानीतवत्यसि न वा ?

**संवर्तिका** : भवदर्थमावारस्य[1] आप्रपदीनस्य चण्डातकस्य[2] च वस्त्रमानीतं वर्त्तते ।

**मन्दारमाला** : (**सात्यौत्सुक्यम् ।**) क्व तद् ?

**संवर्तिका** : (**एकस्माद् बृहतः पत्रवेष्टनकाद्वस्त्रं बहिर्निष्कास्य ।**) इदन्तत् । (**इति मन्दारमालायै प्रयच्छति ।**)

**मन्दारमाला** : (**हस्ते वस्त्रं समादाय सम्यक्परीक्ष्य च ।**) हन्त, नितरां शोभिष्यते मकरन्दकमहाभागः परिधानीययुगलेनैतन्निर्मितेन । (**मकरन्दकमुद्दिश्य ।**) द्रागेव तुन्नवायस्य[3] पार्श्वे सूचीकर्मणे प्रदीयतामेतत् । नूनं प्रियम्प्रतिभाति वस्त्रमिदम् ।

**मकरन्दकः** : इतः प्रदीयताम् । अहमपि पश्यामि कीदृशमिदमिति ।

**मन्दारमाला** : (**मकरन्दकाय प्रयच्छति ।**) अवलोक्यताम् ।

**संवर्तिका** : तर्हि मदीयं निर्वरणं[4] जयप्रदं संजातं नाम ।

**मकरन्दकः** : क्रयव्यवहारपण्डितासि । कस्मान्न निर्वरणं त्वदीयं जयप्रदं स्यात् ! (**इति संवर्तिकायै प्रतियच्छति ।**)

**पुण्डरीकः** : अम्ब, अन्यदपि किञ्चित्समानीतवत्यसि । तदपि निवेदय ।

**कुसुमकर्णिका** : कानिचिदभ्यवहार्यवस्तून्यपि समानीतानि । अम्ब, तेषां वितरणं कदा ?

---

१. आवारः='कोट' इत्यांग्लभाषायाम् ।

२. आप्रपदीनश्चण्डातकः='फुलपैंट' इत्यांग्लभाषायाम् ।

३. तुन्नवायः='टेलर' इत्यांग्लभाषायाम् । 'दर्जी' इति लोकभाषा ।

४. निर्वरणम्='निवड' इति मराठीभाषायाम् । 'चुनाव' इति भाषायाम् ।

**मन्दारमाला** : कियन्मधुरं ब्रूते कुसुमकर्णिकेयम् ? (इति दक्षिणेन करेण कुसुमकर्णिकाया मूर्धजानामृशति ।)

**संवर्तिका** : पुण्डरीक, गच्छ । पाककक्षाच्चीनमृत्स्थालिके द्वे समानय ।

**पुण्डरीकः** : एष समानयामि । (इति निर्गतः ।)

**संवर्तिका** : (कुसुमकर्णिकामुद्दिश्य ।) कुसुमकर्णिके, कियन्तं कालं त्वं मन्दारमालादेव्याः क्रोड एव स्वात्मानं स्थापयिष्यसि ? निर्गच्छ तावत् ।

**मन्दारमाला** : ( कुसुमकर्णिकामुखमुन्नमय्य तां वक्षसा संसज्य च । ) आस्तां नाम साऽत्रैव । अतीव स्निग्धस्वभावा कन्यकेयम्भवदीया । इमामवलोक्यैव केनाप्यवर्णनीयेन स्नेहरसेन परिप्लुतं संजायते हृदयम् ।

**मकरन्दकः** : (स्वगतम् ।) कियानिव विकारशून्यो नैसर्गिको दृढश्च स्नेहभावोऽस्या मदीयेष्वपत्येष्वपि । (प्रकाशम्) नृत्यविद्यायां कीदृश्यस्याः प्रतिपत्तिः ?

**मन्दारमाला** : नृत्ये सङ्गीते च समीचीना गतिः । आदौ स्वरपरिज्ञानमस्याः सम्यग्भवेदिति मे परमः प्रयत्नः । अचिरेणैव कालेन तदस्याः सम्पन्नम्भविष्यति । इयमपि सप्रणिधानमभ्यस्यति[1] नृत्यं सङ्गीतञ्च ।

**मकरन्दकः** : अथ कान्तलकस्य सङ्गीतरुचिः कीदृशी ?

**मन्दारमाला** : इदानीमेव तावत्प्रारम्भस्तस्य तपस्विनः ।

---

१. सप्रणिधानम् = मनोयोगपूर्वकम् ।

**संवर्तिका :** भवती अनयोरुभयोरपि भृशं स्निह्यतीति प्रत्यहमिमौ मत्पुरतो वर्णयतः ।

**मन्दारमाला :** (स्वगतम् ।) मकरन्दके स्निह्यामि तत्तस्यैवात्मजेषु तस्यैव शरीरस्वभावांशसंभूतेषु कथं नैव स्निह्यामि ? (प्रकाशम् ।) अनयोरुभयोरपि प्रकृत्यैव तादृशो मधुरः स्वभावो येनाहमेव किं यः कश्चनापि पश्येदिमौ, स एव वात्सल्यरसस्निग्धः संजायेत । धन्यौ युवामेवङ्गुणोपेतान्यपत्यानि प्रसूय ।

(पुण्डरीकश्चीनमृत्स्थालिके द्वे समानयति ।)

**संवर्तिका :** कुसुमकर्णिके, अवतराधस्तात् । मम साहाय्यं कुरु ।

**कुसुमकर्णिका :** (अवतीर्य ।) किं साहाय्यं मत्तोऽपेक्ष्यते ?

**संवर्तिका :** इमानि सर्वाणि फलान्येकस्यां स्थालिकायां लवणखाद्यकानि च सर्वाण्यपरस्यां संस्थापय ।

**कुसुमकर्णिका :** (तथा कृत्वा ।) स्थापितानि । अथ किमेतदनन्तरं कुर्याम् ।

**संवर्तिका :** (सस्मितम् ।) एतदपि प्रष्टव्यम्भवति किम् ? महता भाग्येनाद्य सौभाग्यवती मन्दारमालादेवी गृहं सम्प्राप्ता । तदेनां सत्कुरु ।

**मन्दारमाला :** का नाम सत्क्रिया ? सर्वैरेव गृह्यताम्फलादिकमिदम् । (कुसुमकर्णिकामुद्दिश्य ।) वत्से, इमे फलादिप्रपूर्णे स्थालिके अत्र मध्यवर्त्तिनि स्तम्भफलके स्थापय । अस्यैव समन्तात्सर्वे स्थास्यन्ति ।

(सर्वे तथा कुर्वन्ति ।)

**मन्दारमाला :** अम्मो, कियन्ति कतिविधानि च फलानि समानीतानि ?

कदलीफलं, मधुरनारङ्गकं, द्राक्षाफलं, कश्मीरशिम्बितिकाफलं[1], वज्रबीजफलं, दाडिमं, सौवीरम्[2] किञ्च तलितदालिमकुष्ठकमग्रसेनपुरीयं,[3] तलितचिपिटकं पुण्येश्वरपुरीयं,[4] सम्भृष्टसलवणकाकचञ्चुफलमज्जा अपरान्तदेशीयाः[5]—हन्त, तावत्कष्टं कस्मात्स्वीकृतम् ?

**मकरन्दकः** : भवती अद्यास्मद्गृहमागमिष्यतीति कदाचित्स्वयम्परमेश्वरेणैव प्रेरिता मम भार्या फलसङ्ग्रहणाय । अन्यथा क्वाचित्क एवैतादृशः फलखाद्यसमाहारः ।

**संवर्तिका** : भूतार्थमाह मकरन्दकः । प्रारब्धप्रेरितैवाहम्प्रवृत्ता खलु ।

**(सर्वे फलखाद्यसम्भक्षणं नाटयन्ति ।)**

**कुसुमकर्णिकापुण्डरीकौ** : **(भक्षणं समाप्य ।)** अम्ब, आवाम्बहिर्गन्तुमर्हाव इदानीम् ?

**संवर्तिका** : अवश्यम् । परं वेलायामेव प्रत्यागन्तव्यम् ।

**कुसुमकर्णिकापुण्डरीकौ** : वेलायामेवायास्यावः । नमस्ते । **(निष्क्रान्तौ ।)**

**संवर्तिका** : **(मन्दारमालामुद्दिश्य ।)** अद्य कथम्भवती सर्वथाऽप्रत्याशितमस्मद्गृहम्पदार्पणेन कृतार्थितवती ?

**मन्दारमाला** : **(किमपि साध्वसमापन्ना ।)** यथा प्रारब्धप्रेरिता भवती फलादीन्याहृतवती, तथा काऽपि प्रारब्धप्रेरणैव मामत्र समानीतव-

---

१. कश्मीरदेशोद्भवं 'सेव' इति ख्यातं फलम् । २. सौवीरम्=स्थूलं बदरम् । ३. तली हुई दालमोठ (आगरे की) ४. तला हुआ चिउड़ा (पूने का) ५. भुनी नमकीन काजू की गिरियाँ (कोंकण प्रदेश की) ।

तीत्येव शक्यते वक्तुं साम्प्रतं तावत् । (साध्वसपरिगृहीतत्वात्तस्या वदनमण्डले वैपुल्येन स्वेदबिन्दूनामुद्भेदः प्रारभ्यते । सा च पुनः पुनस्तदपमार्जनक्रियां नाटयति ।)

**संवर्तिका :** (सूक्ष्मेक्षिकया मन्दारमालाया मुखमण्डले लक्ष्यं बद्ध्वा ।) भवत्याः शरीरप्रकृतिः कीदृशी ? अपि नाम सर्वथाऽनामयम्भवत्याः ?

**मन्दारमाला :** (स्वगतम् ।) कमर्थमभिप्रेत्य प्रश्नोऽयमस्या भवेत् ? (विचिन्त्य तथैव ।) नूनं किञ्चन मनोगतं रहस्यमुद्भावयितुमेवैष प्रश्नः । हा धिक् । प्रतिवचनमपि मद्वदनान्नैव स्फुटति । किम्प्रतिवच्मि ? (प्रकाशम् ।) सर्वथाऽनामयं मे ।

**संवर्तिका :** (तथाविधमेव तत्र लक्ष्यं बद्ध्वा ।) कोऽयं व्यतिकरो येन दर्दरं[1] स्फुटितेन घर्मवारिणा मुहुर्मुहुराव्रियते भवत्या मुखमण्डलम् ?

**मन्दारमाला :** (स्वगतम् ।) हा धिक् । नाऽयं विरमति स्वेदोद्भेदः । एतेन मकरन्दकम्प्रति गाढमनुरक्तस्य मम हृदयस्य सर्वोऽपि संछाद्य स्थापितो भावः सुव्यक्तं निवेदितो भविष्यति । हा धिक् ।(प्रकाशम् ।) एषा प्रकृतिरेव मम मुखस्य यत्र कारणं विनाऽप्युदयते सततं घर्मद्रवः ।

**संवर्तिका :** कासाञ्चिन्मुखानामीदृशी प्रकृतिर्भवति । परं न क्वाप्येतावान्घर्मजलोदयो दृष्टः । तत्र नूनं कारणेन केनाऽपि भवितव्यम् । (साकूतम् ।) अपि नाम संज्वराक्रान्ता भवती ?

---

१. वैपुल्यार्थवाचकमव्युत्पाद्यं क्रियाविशेषणमेतत् । केवलं स्वेदोद्भेदवैपुल्यवर्णनवेलायामेव प्रयोक्तव्यम् ।

**मन्दारमाला :** कीदृशः संज्वरः ?

**संर्वातिका :** (अस्पष्टोपहासगर्भं हसित्वा।) संज्वरः कीदृश इति विचार्यते ? हन्त, किमतः परं मन्त्रयितव्यम् ? (मकरन्दकम्प्रति मुखम्परिवर्त्य।) मकरन्दक, भवताऽपि नैव विज्ञायते जातु संज्वरः कीदृश इति ?

**मकरन्दकः :** (सतिक्तकण्ठस्वरम्।) नायं कालो बहुव्याहरणस्य। कालस्य किञ्चित्तु पौर्वापर्यम्परिचेतव्यं वचनव्यापारमाश्रयद्भिः।

**संर्वातिका :** हन्त, भवानेव पौर्वापर्यविज्ञानपण्डितः। नाहं वेद्मि तत्। (कण्ठस्वरं तारसप्तकान्तं नीत्वा।) मकरन्दक, अपत्यत्रयस्य पित्रा सता परस्त्रीभिः सहैकान्ते निगूढम्प्रणयालापं कुर्वता लज्जितव्यम् !

**मकरन्दकः :** किं कृतं केन, येनाऽयं तारस्वरः ?

**संर्वातिका :** किं-किं नात्र कृतम्भवेद्युवाभ्याम् ? रहसि तरुणीमवाप्य तरुणो जनो यद्यत्करोति तत्तत्सर्वं कृतम्भवेदिति स्पष्टं विभाव्यते।

**मकरन्दकः :** किमत्र प्रमाणम् ?

**संर्वातिका :** सर्वथा जीवकलाविरहिता भवदीया वागव्याहतञ्च मन्दारमालाया उत्तरौष्ठपट्टे समुद्भूदमाप्नुवन्तः स्वेदबिन्दवश्चैते प्रमाणम्।

**मन्दारमाला :** (सातिस्निग्धस्वरम्।) नूनम्भूतार्थवेदिनी भवती। भवत्याः कृते सर्वथा कृतापराधाऽहम्। परं स्वात्मनः कृते मया नहि कोऽप्यपराधः कृतः। मकरन्दकं, मकरन्दकस्यापत्यानि,

मकरन्दकस्य भार्यामत्रभवतीं—सर्वान्प्रत्येव नितरामकृत्रिमः स्नेहभावो मे । इदानीं यावत्संयम्य स्थापितमात्मानं नाहमद्य संयन्तुं शशक । एष एव मदीयोऽपराधः । अथैतदनन्तरमत्र-भवती प्रमाणम् ।

**संवर्तिका :** (**सद्यः सद्भावमापन्ना ।**) सखि, मन्दारमाले, स्मरामि स्नेह-व्यापारम् । मकरन्दकं विलोक्य ममापि तादृश एव भावोदयो जात असीत् । सञ्जातभावोदयानां स्त्रीणां हृदयं कीदृशीम्पेल-वताम्भजत इत्यपि सम्यक् स्मरामि । परतन्त्रं नारीणां हृदयम् । अत्र कः कस्य दोषमाविष्कुर्यात् ? अवैमि कियता स्नेहेन त्वं ममापत्ये सङ्गीतविद्यां नृत्यविद्याञ्च शिक्षयसि । (**सस्मितम् ।**) नात्र वस्तुनि तवापराधः । आत्मानं लोकचित्ताकर्षणस्य केन्द्रागारमिव विधाय वर्त्तमानस्य मम पत्युः सौम्यः स्वभाव एवात्रापराध्यति । सखि, क्षमस्व माम् ।

**मन्दारमाला :** सखि, संवर्तिके, दुर्लभा खलु लोक ईदृश्यौदार्यसम्पत्तिः । स्वभावत एवाऽसूयाकलुषितं स्त्रीहृदयम् । त्वादृशी सुविवेक-सम्पन्नहृदया क्व लभ्यते ? धन्याऽसि ।

**मकरन्दकः :** (**संवर्तिकामुद्दिश्य ।**) संवर्तिके, अनेन त्वदीयेन विवेकवाक्येन ध्वस्तं नाम साध्वसं मे हृदयस्य । अथ त्वमेव पश्य, यः कश्चनापि मयि स्निह्यति, तम्प्रति कथमस्नेहवान्स्यामहम् ? यदा ज्ञातानि मया कान्तलकमुखान्मन्दारमालाया मन्निबन्धनानि स्नेहातिशय-लक्षणानि, तदा स्वभावत एव ममापि हृदयं मन्दारमालाया विषये स्नेहसमुत्सुकं समजनि ।

**मन्दारमाला :** मयैव कान्तलक एतद्वस्तुविनिवेदनाय प्रेरित आसीत् ।

**संवर्तिका** : केवलं जिज्ञासेति पृच्छामि । कः खल्वनुरागोदयस्य प्रथमो हेतुः ?

**मन्दारमाला** : भवत्या प्रेषितं मकरन्दकस्य पुस्तकत्रयम् । तत्र प्रकाशितानि प्रणयरसबन्धुराणि गीतानि वाचयित्वा साहजिकमेव मे मनः प्रह्वीभूतम् । अनुरागोदयस्यैष प्रथमो हेतुः । द्वितीयश्च तेषु पुस्तकेषु प्रकाशितो मकरन्दकस्य प्रतिच्छन्दकः । तं विलोक्य केनापि प्रबलेन कुतूहलेनाक्षिप्तं मे हृदयम् । एकस्य पत्युः पत्नीत्वेन वर्त्तमानाया मम चित्तस्यैतादृशमन्यजनगामित्वं सामाजिकव्यवहारशास्त्रविरुद्धमिति सर्वथा संयम्यात्मानं मया बहवो दिवसा अतिवाहिताः । परमेवं मनसोऽन्तराले निगुह्य स्थापिता इमे मनोभावा विलयं नैव यान्तीत्ययमेव शोकान्तकः[1] । मनस्यङ्कुरितस्य बद्धमूलस्य च भावस्य कस्यापि निगूहनं तस्य संवर्धनमेव भवति । तथा संवर्धितानुरागाया ममात्रागमनापराधोऽयमद्यतनो घटितः ।

**संवर्तिका** : सर्वं सङ्गच्छते । यथास्थितं मनोगतं निवेदितायां सत्याम्भवत्यां सर्वोऽपि सन्देहसन्दोहो विनाशं गतः । अनुरागो नापराधम्भजते । तस्यापरेभ्यो निगूहनप्रयत्न एव कारणं विना परेषां चेतस्युपद्रवं जनयति । स्त्रीजनहृदयसाहजिक्याऽसूयावृत्त्या च क्षुद्रस्याऽपि तस्योपद्रवस्य महत्यां मानसिक्यां विपदि रूपान्तरं संजायते कलहादिकञ्च प्रवर्धते । अथ सर्वमपि सुस्पष्टं व्यक्तीकुर्वत्या भवत्या तस्योपद्रवस्य मूलमेव विच्छिन्नम् । तेनेतोऽप्यधिकतरं मे प्रियसखी संवृत्ता भवती ।

**मन्दारमाला** : एतेन वचनेन भवत्या महाशयत्वं प्रकाश्यते । सर्वेषामेव

---

१. शोकपरिपूर्णोऽन्तो यस्य व्यापारस्य स 'शोकान्तकः' ।

हृदयस्योपद्रवोच्छेदः सजातः । अत्र नूनम्भवत्येवाभिनन्दनीया ।

**मकरन्दकः** : नूनं समर्थये मन्दारमालावचनम् । संवर्तिकैवात्र सर्वाधिकमभिनन्दनीया । एतेन सर्वेषामेव सुप्रियं संघटितम् । अथ भूयोऽपि किं युवयोः प्रियमुपनयामि ? तथापीदमस्तु भरतवाक्यम्—

**यस्मिन्वस्तुनि यो जन्तुर्दृढं बद्धादरो भवेत्,**
**तस्य तत्प्राप्यतां; भूयात्सर्वस्यानन्दवर्धनम् ।**

**(इति प्रहर्षपरभागं नाटयन्तो निष्क्रान्ताः सर्वे ।)**

इति त्रयोदशः संवादः ।

समाप्ता चेयं संवादमाला ।

# शुभाशंसनम्

श्रीमद्भिरानन्दवर्धनाभिधै रत्नपारखीत्युपाह्वै: 'संवादमाला' स्वलिखिता मे दर्शिता । गीर्वाणवाणीद्वारा कृतापि विचारव्यक्तिः सुबोधा मनोहारिणी च भवतीत्यस्योत्कृष्टमुदाहरणमियं रचना । कार्यालये विद्यमानं वातावरणं मूर्त्तिमज्जातमेतेषु संवादेषु । सर्वथा धन्यवादार्हा लेखकमहोदया अस्याः संस्कृतभाषासेवायाः कृते ।

एफ्-४८, लोकमान्यनगर,
मुंबई-१६ ।
दिनांकः : १४. ८. १९५९

—रं. रा. देशपाण्डे
रामनारायण रूइया-महाविद्यालये
संस्कृत-प्राध्यापकः ।